**मर्यादा** पूजाप्रकारः, **तरलकरणानां** चञ्चलचित्तानां, **असुलभा** दुर्लभा। "अन्तःपुरप्रवेशः चञ्चलचित्तानां नास्तीति प्रसिद्धम्। अतो निश्चलचित्तैस्तु सौविदल्लैः प्रवेष्टव्यम्" इति नीतिवाक्यामृते। निर्मलचित्तैरेव सुधाम्भोधि-मध्यस्थितायाः पादाम्बुजसेवा ज्ञायते नान्यैरित्यर्थः। **तथा, हि**ः प्रसिद्धौ। **एते नीताः शतमखमुखाः** इन्द्रमुख्याः सुरगुणाः **सिद्धिं** संसिद्धिं, **अतुलां** असदृशीं, **तव** भवत्याः **द्वारोपान्तस्थितिभिः** द्वारसमीपे स्तितयो यासां ताभिः। **अणिमाद्याभिः** अणिमाप्रमुखाभिः सिद्धिभिः सह **अमराः** निर्जराः॥

अत्रेत्थं पदयोजना—हे भगवति! पुरारातेरन्तःपुरमसि। तत-स्त्वच्चरणयोस्सपर्यामर्यादा तरलकरणानामसुलभा। तथा हि—एते शत-मखमुखाः अमराः तव द्वारोपान्तस्थितिभिः अणिमाद्याभिः सह अतुलां सिद्धिं नीताः।

यथा तव द्वारोपान्तमेव अणिमादिसिद्धयस्सेवन्ते एवमिन्द्रादयोऽपि। इयांस्तु विशेषः—अणिमाद्यष्टसिद्धीनां द्वारपालकत्वेन सर्वदा तत्र वासः स्वभावसिद्धः। इन्द्रादीनां तु तरलकरणत्वात् अन्तःपुरप्रवेशानर्हत्वात् दौवारिकानुमत्या द्वारदेशेऽवस्थानं सिद्धिशब्दार्थः इति तात्पर्यम्॥ ९५॥

**कळत्रं वैधात्रं कतिकति भजन्ते न कवयः**
**श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः।**
**महादेवं हित्वा तव सति सतीनामचरमे**
**कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः॥ ९६॥**

कश्मलात्त्रायत इति **कलत्रं पत्नी**। कश्मलं नरकं मध्यवर्णलोपः पृषो-दरादित्वात्साधुः। कलत्रं कश्मलात् त्रायत इति रक्षितः। **वैधात्रं** विधातृ-सम्बन्धि। विधातृशब्दस्य 'तस्येदम्' इत्यणि कृते संबन्धमात्रपरत्वे तद्विशेष-

जिज्ञासायां कलत्रशब्दस्यान्वय इति । धातुः कलत्रमित्युक्ते तु संबन्धमात्रे निहिता षष्ठी सबन्धिन्येव पर्यवस्यतीति साक्षादन्वय इति भावः । अतो नायं प्रयोगो दोषावहः । वैधात्रं कलत्रं सरस्वतीं **कतिकति भजन्ते** सेवन्ते । **न कवयः** के वा कवयो न भजन्ते सर्वेऽपि भजन्त इत्यर्थः । **श्रियो देव्याः** लक्ष्म्याः, **को वा न भवति पतिः** [1]**कैरपि धनैः । महादेवं** सदाशिवं **हित्वा तव** भवत्याः, **सति !** पतिव्रते ! **सतीनां** पतिव्रतानां, **अचरमे!** अग्रगण्ये ! **कुचाभ्यां आसङ्गः** आलिङ्गः, **कुरवकतरोरपि असुलभः** सुलभो न भवति । कुचालिङ्गनं दोहदत्वेनापि कुरवकतरोरचेतनस्यापि न सम्भवति, किमु वक्तव्यं पुरुषान्तर इति पातिव्रत्यं वाचामगोचरमिति भावः ॥

अत्रेत्थं पदयोजना—हे सति ! वैधात्रं कलत्रं कतिकति कवयः न भजन्ते । श्रियो देव्याः कैरपि धनैः को वा पतिः न भवति । हे सतीनामचरमे ! महादेवं हित्वा तव कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः॥

अयमर्थः—ये मन्त्रजपाद्यासादितसारस्वताः ते सरस्वतीवल्लभा इति गीयन्ते । ये धनधान्याश्वगजादिसमृद्धिमन्तः ते लक्ष्मीपतयः इति गीयन्ते । पार्वतीपतिस्तु महादेव एवेति पातिव्रत्यमहिमा अवाङ्मनसगोचर इति ॥९६॥

**गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो**
**हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।**
**तुरीया कापि त्वं दुरधिगमनिस्सीममहिमा**
**महामाया विश्वं भ्रमयसि परब्रह्ममहिषि ॥ ९७ ॥**

---

[1] अधिपतिरित्यधिकः पा.

**गिरां** वाचां, **आहुः** कथयन्ति । **देवीं** अधिदेवतां **द्रुहिण-गृहिणीं** ब्रह्मणः पत्नीं **आगमविदः** आगमरहस्यवेदिनः, **हरेः** विष्णोः, **पत्नीं** जायां, **पद्मां** पद्मालयां **हरसहचरीं** शंभुपत्नीं **अद्रितनयां** पार्वतीम् । **तुरीया** चतुर्थी, **कापि** अनिर्वाच्या, **त्वं दुरधिगमनिस्सीममहिमा** दुःखेन अधिगन्तुं शक्यः स चासौ निस्सीमो महिमा यस्याः सा, देशतः कालतो वस्तुतश्चापरिच्छेद्येत्यर्थः । **महामाया** शुद्धविद्यान्तर्गतं मायातत्त्वं, **विश्वं** प्रपञ्चं, **भ्रमयसि** विवर्तयसीति विवर्तं ब्रह्मधर्मं मायायामतिदिशति । **परब्रह्ममहिषि** परब्रह्मणः सदाशिवस्य महिषि ! तथा च श्रूयते–'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' * इति पुरुषसूक्ते । ह्रीः भुवनेश्वरी लक्ष्मीः श्रीविद्या उभे ब्रह्मणस्ते पत्न्यौ । अत्र तयोर्मध्ये श्रीविद्यायाः प्राधान्यं, श्रीविद्यायां भुवनेश्वर्या अन्तर्भावात् । भुवनेश्वर्यां न श्रीविद्याया अन्तर्भाव इति चन्द्रकलाप्राधान्येन सैव महिषीति ध्येयम् ॥

अत्रेत्थं पदयोजना–हे परब्रह्ममहिषि ! आगमविदः त्वामेव द्रुहिण-गृहिणीं गिरां देवीमाहुः ; त्वामेव हरेः पत्नीं पद्मामाहुः, त्वामेव हरसह-चरीं अद्रितनयामाहुः, त्वं तुरीया कापि दुरधिगमनिस्सीममहिमा महा-माया सती विश्वं भ्रमयसि ॥

अयमर्थः—एकामेव भगवतीं नानानामभिः गृणन्त्यागमविदः पर-ब्रह्ममहिषी श्रीविद्यापरनामधेया चन्द्रकला एकैवेति ॥ ९७ ॥

**कदा काले मातः कथय कलितालक्तकरसं**
**पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।**

---

* तै. आ. ३-१३.

**प्रकृत्या मूकानामपि च कविताकारणतया**
**कदा धत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ९८ ॥**

**कदा काले** जन्मप्रभृत्यवसानपर्यन्त इति शेषः । **मातः** ! जननि ! **कथय** सम्यगुपदिश । **कलितालक्तकरसं** कलितं उपदिग्धं अलक्तकरसं लक्षारसं यावकं वा । स्त्रीणां पादाधरोष्ठरञ्जनार्थं अलक्तकद्रवं उपदिहन्ति सैरन्ध्र्यः । **पिबेयं** प्रार्थनायां लङ् । **विद्यार्थी** विद्याः अर्थयत इति विद्यार्थी । यद्वा—अर्थः प्रयोजनमस्य अर्थी विद्याभिः अर्थीति । अत्र रक्षित आह—'अर्थशब्दान्मत्वर्थे* इनिप्रत्ययः' इति । अत एव 'तेनार्थवान् लोभपराङ्मुखेन' इति कालिदासेन मतुबेव प्रयुक्तः । माघे—'नितान्तमर्थिनः' इति णिनिरेव । 'अर्थी समर्थी विद्वान्' इत्यादावपि णिनिरेव । अत एव पूर्वव्याख्यैव समीचीना । **तव** भवत्याः, **चरणनिर्णेजनजलं** चरणयोः पादयोः निर्णेजनजलं पाद्योदकं, **प्रकृत्या** स्वभावेन **मूकानां**, **अपि** विरोधे, चकारश्शङ्काच्छेदे, **कविताकारणतया** कवितायाः हेतुतया, **कदा धत्ते वाणीमुखकमलताम्बूलरसतां** वाण्याः सरस्वत्याः मुखकमले यस्ताम्बूलरसः तस्य भावस्तत्ता ताम् ॥

अयं भावः—भगवतीपादारविन्दनिर्णेजनजलं सालक्तकं कविताहेतुः कवीश्वरस्य वदने स्थितं सरस्वतीताम्बूलरस इव प्रत्यक्षं भाति । स तु कवीश्वरः पुंभावमापन्ना सरस्वतीवाभातीति ॥

अत्रेत्थं पदयोजना—हे मातः ! तव कलितासक्तकरसं चरणनिर्णेजनजलं विद्यार्थी अहं कदा काले पिबेयं कथय । तच्च प्रकृत्या मूकानां अनेडमूकानां वक्तुं श्रोतुं अशिक्षितानामपि च कविताकारणतया वाणी–मुखकमलताम्बूलरसतां कदा धत्ते ॥

---

* शब्दात् भावार्थे. पा.

अत्रेदमनुसन्धेयम्—भगत्पादैः अनेडमूकेभ्यः लघुचर्चास्तोत्रद्वयं हस्तमस्तकसंयोगमहिम्ना अवाचि । तन्महिम्ना भगवती पादारविन्दनिर्णेजनजलं तन्मुखे दत्तवती । तन्निर्णेजनजलं पुनः प्रार्थयत्याचार्यः । अनेन सामीप्यमुक्तिरुदिता । तद्विशेषानुत्तरश्लोके विवरिष्यामः । चरणनिर्णेजनजलमिति वदता समयिमतमेवोक्तं, कौलमते भुजगाकारेणैव देव्या अवस्थानात् चरणनिर्णेजनजलस्याभावात् ! सहस्रकमल एव चरणनिर्णेजनजलमिति पूर्वमेव बहुधा प्रपञ्चितम् । अत एव—

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः ।।*

इतीदमर्धं समयमतप्रतिपादकम् ।

अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ।।*

इतीदमर्धं कौलमतप्रतिपादकमिति विवेकः ।।

अत्रोत्प्रेक्षालङ्कारः, चरणनिर्णेजनालक्तकरसस्य सरस्वतीताम्बूलरसत्वेनाध्यवसानात् । समयिनः साक्षात्सरस्वतीस्वरूपत्वेनाध्यवसानाच्च उत्प्रेक्षातिशयोक्त्योः सङ्करः ।। ९८ ।।

प्रक्रान्तां स्तुतिं उपसंहरन् षट्कमलभेद[1]सिद्धान्तं निर्दिशति—

**सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते**
**रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।**
**चिरंजीवन्नेव क्षपितपशुपाशव्यतिकरः**
**परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ।।**

---

*दशमः श्लोकः. [1] शास्त्रभेद.

**सरस्वत्या** भारत्या, **लक्ष्म्या** पद्मालयया, **विधिहरिसपत्नः**—यथाक्रममिति शेषः। सरस्वतीपतित्वेन विधिः ब्रह्मणः सपत्नः असूयास्पदम्, लक्ष्मीपतित्वेन हरेः असूयास्पदमित्यर्थः। **विहरते** विहरमाणः, **रतेः** काममहिष्याः, **पातिव्रत्यं** पतिव्रताधर्मं पुरुषान्तरासंपर्करूपं **शिथिलयति**, मन्मथाकारतया रतेः मन्मथभ्रान्तिं जनयन् सम्भोगेच्छां जनयतीति भावः। **रम्येण** अतिसुन्दरेण, **वपुषा** शरीरेण, तादात्म्यबुद्ध्येति यावत्। एवं सादाख्यायाः कलायाः उपासकस्य ऐहिकफलमुक्त्वा आमुष्मिकमप्याह—**चिरंजीवन्नेव** नित्यजीवनस्सन्। सावयवद्रव्यस्य नित्यत्वं पशुपाशव्यतिकरक्षपणहेतुकम्। अत्र केवलव्यतिरेकि अनुमानं साधनत्वेन प्रयोज्यम्—सावयवं यत् क्षपितपशुपाशव्यातिकरं न भवति, तन्नित्यं न भवति, यथा पश्वादि, इति जीवन्मुक्तिसिद्धिः। सावयवाः कपिलादयः, मार्कण्डेयादयो नित्यसिद्धाः, अतः अन्वयव्यतिरेकि वा भवतु सावयवस्य नित्यतायां साधनम्। एवं नित्यजीवनः सन् **क्षपितपशुपाशव्यतिकरः** क्षपितः विनष्टः पशुपाशयोः व्यतिकरः। पशुः जीवः, इन्द्रियैः प्रपञ्चं पश्यतीति। यद्वा—पश बन्धने इत्यस्माद्धातोः पशुः अविद्याबद्धो जीवः, पाशः अविद्या। एतच्च श्रूयते—

**अदितिः पाशं प्र मुमोक्त्वेतन्नमः**
**पशुभ्यः पशुपतये करोमि ॥***

अस्यार्थः—अदितिः आदित्यमण्डलान्तर्गता बैन्दवी शक्तिः। पाशं अविद्याकृतं बन्धं प्रमुमोक्तु प्रकर्षेण अत्यन्तं मोचयतु। एतत् नमः नमस्कारं पशुपतये करोमि। पशुभ्य इति तादर्थ्ये चतुर्थी। तदर्थत्वं निवृत्तिः। पशुत्वनिवृत्त्यर्थम्। अयमर्थः—अदितिः पशुपतिना सदाशिवेन युक्ता पाशविमोचनं करोत्विति। पशुशब्दस्य जीववाचित्वं

---

* तै. सं. ३ १-४.

तैत्तिरीयके सौम्यकाण्डे 'तेषामसुराणाम्'* इत्यनुवाके तेषामसुराणामित्यारभ्य 'तस्माद्रुद्रः पशूनामधिपतिः'*इत्यन्तेन प्रतिपादितम्। अतः पशुपाशौ जीवाविद्ये, तयोर्व्यतिकरः संबन्धः, स च क्षपितः विदलितपशुपाशसंबन्धः सदाशिवतत्त्वात्मनाऽवस्थितः, **परानन्दाभिख्यं** परानन्दात्मिका अभिख्या ज्योतिर्यस्य सः तं परानन्दाभिख्यं ज्योतीरूपं, **रसयति** आस्वादयति **रसं, सुखं, त्वद्भजनवान्** त्वद्भक्तः—तव भजनं सेवा ॥

अत्रेत्थं पदयोजना—हे भगवति! त्वद्भजनवान् सरस्वत्या लक्ष्म्या विधिहरिसपत्नः सन् विहरते। रम्येण वपुषा रतेः पातिव्रत्यं शिथिलयति। क्षपितपशुपाशव्यतिकरः चिरंजीवन्नेव परानन्दाभिख्यं रसं रसयति ॥

अत्रेदमनुसन्धेयम्—जीवन्मुक्तानां अविद्यानिवृत्तावपि कुलालचक्रभ्रमणन्यायेन देहसंबन्धः। यथोक्तं षष्टितन्त्रे सप्तत्याम्—

सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः ॥ इति ॥

अत्र त्वद्भजनवानित्यत्र द्विविधं भजनं—षट्चक्रसेवात्मकं धारणात्मकं च। आद्यं निरूप्यते—आधारस्वाधिष्ठाने तामिस्रलोकत्वात् नोपास्ये। मणिपूरप्रभृतिसहस्रकमलपर्यन्तं पञ्च चक्राणि पूज्यानीति। तत्र मणिपूरकपूजापराणां सार्ष्टिरूपा मुक्तिः। सार्ष्टिर्नाम देव्याः पुरसमीपे पुरान्तरं निर्माय सेवां कुर्वाणस्य अवस्थितिः। संवित्कमलपूजारतानां सालोक्यमुक्तिः सालोक्यं नाम देव्याः पट्टणे निवासः। विशुद्धिचक्रोपासकानां सामीप्यमुक्तिः। समीप्यं नाम अङ्गसेवकत्वम्। अज्ञाचक्रोपासकनां सारूप्यमुक्तिः।

---

* तै. सं. ६-१-३.

सारूप्यं नाम समानरूपत्वम् । पृथग्देहधारित्वेनेति सायुज्याद्भेदः । एतत् चतुर्विधं गौणं बाह्यदुःखातिवर्तित्वमात्रात् मुक्तिरिति व्यपदिश्यते । परं तु सायुज्यात्मिकैव शाश्वती मुक्तिः सहस्रकमलोपासकानामेवेति । अत एव परानन्दाभिख्यं रसं यथायोग्यं त्वद्भजनवान् रसयति इति ॥

अत्रेदं मततत्त्वम्—षट्कमलभेदमते सुखस्वरूपैव मुक्तिः । सुखं तु लौकिकदृष्टान्तेन स्त्रीसंभोगात्मिकै(त्मकमे)व । लोकेऽपि स्त्रीसम्मेलनात् परं सुखं नास्ति । एवमत्यन्तदुःखोच्छेदानन्तरं सायुज्यसंसिद्धौ शिवशक्तिसम्पुटान्तर्भावात् तदात्मिकैव मुक्तिरिति ॥

तदयमत्र निष्कर्षः—पूर्वं मूलाधारादिषट्चक्राणां त्रिकोणाष्टकोण-दशारद्वितयमन्वश्रशिवचक्रात्मना तादात्म्यं प्रतिपादितम् । एतदेव नाद-बिन्द्वोरैक्यम् । तथा हि—नादो नाम श्रीचक्रम् । बिन्दुर्नाम षट्कमलगहनं वक्ष्यते । तयोरैक्यं नाम आधारचक्रं चतुर्दलं, तत्कर्णिका त्रिकोणात्मिका ; स्वाधिष्ठानं षड्दलं, तत्कर्णिका अष्टकोणात्मिका ; मणिपूरं दशदलं पद्मं, तत्कर्णिका दशकोणात्मिका ; अनाहतं द्वादशदलं, तत्कर्णिका द्वितीयदश-कोणात्मिकैव; विशुद्धिचक्रं षोडशदलं, तत्कर्णिका चतुर्दशकोणात्मिका ; एतावत्पर्यन्तं शक्तिचक्रैक्यम् । आज्ञाचक्रं द्विदलं, अष्टकोणमेकत्र षोडश-कोणमपरत्रेति द्विधा भिन्ना कर्णिका । अयं भावः—[1]द्विधा भिन्नं चतुरश्र-प्रकृतिकं शिवचक्रचतुष्टयात्मकं आधारस्वाधिष्ठानात्मकं चेति प्रपञ्चितम् । वृत्तत्रयं स्वाधिष्ठानान्ते एकं वृत्तं रुद्रग्रन्थ्यात्मकं ; अनाहतान्ते एकं विष्णु-ग्रन्थ्यात्मकं, आज्ञाचक्रान्ते एकं ब्रह्मग्रन्थ्यात्मकम् । तत उपरि चतुर्द्वारो-पेतं भूपुर[2]त्रितयं द्वारेषु चतुर्षु सोपानयुक्तम् । तच्च सहस्रदलकर्णिका । तस्य कमलस्य दलानि सहस्रम् । बैन्दवस्थानं चतुर्द्वारोपेतं कर्णिकामध्ये ।

---

[1] द्विदलाद्भिन्नम्· [2] त्रितयोपेतं पुरत्रयम्·

एवं प्रासादन्यायेन श्रीचक्रस्य कमलानां चैक्यमनुसन्धेयम् । एतच्च नाद-बिन्द्वैक्यं गुह्यात् गुह्यतमं शिष्यानुग्रहात् उपदिष्टम् ॥

अस्मिन् षट्चक्रे पञ्चाशत्कलानामन्तर्भावः कथितः । चन्द्रखण्डे स्वराः, सूर्यखण्डे स्पर्शाः, अग्निखण्डे अन्तस्थाः ऊष्माणश्च हकारवर्जिताः, हकारळकारौ बैन्दवे, क्षकारस्सर्वत्रेति *'सवित्रीभिः' इति श्लोकेन प्रागेव प्रतिपादितम् । मूलाधारादिदलेषु कलानां अन्तर्भावः प्रागेव प्रतिपादितः । कलानां तिथ्यात्मकत्वं, नित्यानां कलात्मकत्वं, कलानां मूलमन्त्रगतपञ्चदशा-क्षरात्मकत्वं, पञ्चदशाक्षराणां त्रिखण्डत्वं, त्रिखण्डस्य सोमसूर्यानलात्मकत्वं, सोमसूर्यानलानां ग्रन्थित्रयात्मकत्वं, ग्रन्थित्रयस्य मन्त्रगतह्रीङ्कारत्रयात्मकत्वं, ह्रीङ्कारस्य भुवनेश्वरीमन्त्रत्वं, भुवनेश्वरीमन्त्रस्य मूलमन्त्रान्तर्गतत्वं मूलमन्त्रस्य चक्रेणैक्यं, तच्चक्रनवकस्य मूलाधारादिषट्चक्रेषु ब्रह्मग्रन्थ्यादित्रिकेऽपि सहस्र-कमलकर्णिकादौ तादात्म्यम् । एतदेव कलानादयोरैक्यं नाम ॥

अयमत्र निष्कर्षः—नादेन बिन्दोरैक्यं, बिन्दुना कलायाः ऐक्यं, कलायाश्च नादेनैक्यं, एवं त्रितयं ; कलया बिन्दोरैक्यं, कलया नादस्यैक्यं, श्रीविद्याया पञ्चकस्यैक्यमिति षड्विधत्वमैक्यस्येति परमरहस्यं गुरूपदेशवशात् ज्ञेयम् । एवं षोढैक्यं भगवत्याः सपर्येति सम्यगुपवर्णितम् । षोढैक्यानुसन्धाना-नन्तरं दशभुजा भगवती श्रीविद्या मणिपूरे प्रत्यक्षं परिदृश्यमाना सपर्यया सन्निधेयेति ऐक्यानुसन्धानमेव सपर्येति वदतो ममाशयः इति विज्ञेयम् ।

अधुना बिन्दुस्वरूपं प्रपञ्च्यते—बिन्दुरिति मूलाधारादिचक्रषट्कम् । बिन्दुः जगदुत्पत्तिलयहेतुः शिवस्य शक्तिविशेषः । स च एक एव सहस्र-कमलान्तचतुर्द्वारात्मककर्णिकामध्यगतचतुष्कोणात्मकं शक्तितत्त्वम् । तन्म-ध्यगतशिवतत्त्वं नाद इत्युच्यते । स चतुर्विध इति प्रागेवोक्तम् । उभयोः

---

* १७ श्लोक.

शक्तिशिवयोः शब्दार्थरूपत्वात् कलात्मकत्वं उभयसाधारणम् । अतश्च मेलनं नादबिन्दुकलातीतमिति समयमतरहस्यम् । स च बिन्दुः दशधा भिद्यते । यथोक्तम्—

> दशधा भिद्यते बिन्दुरेक एव परात्मकः ।
> चतुर्धाऽऽधारकमले षोढाऽधिष्ठानपङ्कजे ॥
> उभयाकाररूपत्वादितरेषां तदात्मता । इति ।

अस्यार्थः-एक एव बिन्दुः मूलाधारकमलगतचतुर्दलेषु चतुर्धा, स्वाधिष्ठानपद्मगत-षड्दलेषु षोढा, एवं दशधा भिद्यते । अयं भावः—मूलाधारं चतुष्पत्रं सरसिजं, स्वाधिष्ठानं षड्दलं मणिपूरं दशदलं, अनाहतपद्मं द्वादशदलं, विशुद्धिपद्मं षोडशदलं, आज्ञाचक्रं द्विदलमिति सर्वयोगशास्त्रसिद्धम् । अत्र आधारपद्मस्य दलचतुष्टयं बिन्दुचतुष्टयात्मकम् । ते च बिन्दवो मनोबुद्ध्यहङ्कारचित्ताख्याः प्रकृत्यात्मकाः जगन्निर्माणहेतव इति सर्वयोगशास्त्रसिद्धम् । स्वाधिष्ठानपद्मगतषड्दलानां कामक्रोधलोभमोहमदमात्सर्यात्मकाः षड्बिन्दवः । अत एव ते संहतिबिन्दव इत्याहुः । तदुक्तं भगवता पतञ्जलिना—'स्वाधिष्ठाने संहारः षडबिन्दुकृतः' इति । एवं दश बिन्दवः कमलद्वयदलात्मकाः । मणिपूरं मूलाधारस्वाधिष्ठानात्मकमिति कृत्वा दशदलम् । अनाहतचक्रे मणिपूरप्रकृतिकं दशदलं, पूर्वकमलद्वयप्रकृतिकं दलद्वयं द्वादशदलं अनाहतपद्मम् । विशुद्धिपद्मं तु अनाहतचक्रप्रकृतिकं द्वादशदलम् , आधारप्रकृतिकं चतुर्दलं, एवं षोडशदलम् । तथा मणिपूरप्रकृतिकं दशदलं स्वाधिष्ठानप्रकृतिकं षड्दलमिति षोडशदलम् । आज्ञाचक्रं तु आधारस्वाधिष्ठानात्मकमिति द्विदलम् । एवं मणिपूरप्रभृति आज्ञान्तानि चत्वारि कमलानि मूलाधारस्वाधिष्ठानप्रकृतिकानि । अत एव मूलाधारद्विके उत्तरकमलचतुष्कमन्तर्भूतमिति एकस्यैव बिन्दोः दशधात्वं नान्यथेति सिद्धम् ॥

यद्यपि कौलानां द्विकानुसन्धानात् षट्कमलानुसन्धानफलं सेत्स्यति, तथापि षड्विधैक्यानुसन्धानाभावात् कुलमार्ग एवेति न देव्या मणिपूरे सान्निध्यं, पञ्चविधमुक्तियुक्त्यभावश्च, नादबिन्दुकलातीतत्वमप्यसंभाव्यमेव कौलमते इति । समयिनां तु कार्यभूतचतुष्कानुसन्धानादेव कारणभूतकमल-द्वयानुसंधानफलं सेत्स्यतीति । अत एव पञ्चविधसाम्यसिद्धौ समयसमयि-भावः प्रत्यक्षं परिदृश्यते समयसमयिनोः समयिनां सेवकानामिति भगवत्पादमततत्त्वम् ॥

एवं भजनशब्दार्थं प्रतिपाद्य प्रकारान्तरेण भजनशब्दार्थो निरूप्यते-यदाहुः भगवत्पादाः 'धारणापरिज्ञानान्मुक्तिः' इति । अस्यार्थः—धारणाः षष्ट्युत्तरत्रिशतसङ्ख्याकाः । धारणा नाम वायोः कमलेषु नादकलाभ्यां निरोधः । स च षट्कमलेषु षोढा सप्तमे कमले समयशब्दाभिलप्येन सार्धं सप्तविधः । एकैकस्मिन् कमले पञ्चाशदिति षष्ट्युत्तरत्रिशतं धारणाः (?)। ताश्च पृथक् नादबिन्दुकलाभिस्सार्धं मेलनप्रकारैरनन्ता धारणा गुरूपदेशवशादवगन्तव्याः । धारणानां फलं आधारादिचक्रषट्के यथाक्रमं मतिस्मृतिबुद्धिप्रज्ञामेधाप्रतिभा-संविद्रूपं दिङ्मात्रं दर्शितम् । अधिकं तु सुभगोदये चरणागमे च सप्रपञ्चं बहुधा प्रतिपादितं तत एवावधार्यं ग्रन्थविस्तरभयान्नोपवर्णितमिहेति । अत एव काळिदासभगवत्पादैः कुलसमयमतभेदप्रतिपादकश्लोकेन सकलजननी-स्तोत्रे कथितम् । यथा—

चतुष्पत्रान्तष्षड्दलपुटभगान्तस्त्रिवलय-
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतिलते ॥
षडश्रं भित्वाऽऽदौ दशदलमथ द्वादशदलं
कलाश्रं च द्व्यश्रं गतवति नमस्ते गिरिसुते ॥

अस्यार्थः—चतुष्पत्रं आधारकमलं अन्तः अन्तस्स्थितं अन्तर्भूतमित्यर्थः,

यस्मिन् तत् । स्वाधिष्ठानमिति बहुव्रीहिः, न तु तत्पुरुषः, उत्तरस्य पूर्वस्मिन्नन्तं-र्भावायोगात् । 'षडश्रं भित्वाऽऽदौ' इत्युत्तरवाक्यानन्वयाच्च बहुव्रीहिरेव । चतुष्पत्रान्तश्च तत् षड्दलं स्वाधिष्ठानं च चतुष्पत्रान्तष्षड्दलम् । तस्य पुटभगाः पुटात्मकाः सम्पुटात्मकाः तत्प्रकृतिका इति यावत् , ते च ते भगाः त्रिकोणानि । मणिपूरप्रभृति चतुश्चक्रस्य मूलाधारप्रकृतिकत्वस्योक्तत्वात् तेषां त्रिकोणात्मकत्वम् । 'त्रिकोणे बैन्दवं श्लिष्टं अष्टारेऽष्टदलाम्बुजम्' इत्यत्र सम्यङ्निर्णीतम् । पुटभगानां अन्तः मध्ये । त्रिवलयं ग्रन्थित्रयं स्वाधिष्ठा-नानाहताज्ञान्तेषु अग्निसूर्यचन्द्रात्मकरुद्रग्रन्थिविष्णुग्रन्थिब्रह्मग्रन्थिपर्यायत्वेन स्थितमित्यर्थः । तत्र स्फुरत् स्फुरन्ती । 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे' इत्यादिना पुंवद्भावः । विद्युतः सौदामिन्याः वह्नेः अग्नेः द्युमणेस्सूर्यस्य । नियुतशब्दः अगाणेयां सङ्ख्यां लक्षयति । तस्येवाभा यस्यास्सा, सा च सा द्युतिलता, नित्या तटिद्वल्ली स्थिरसौदामिनीति यावत् । तस्याः सम्वुद्धिः । आज्ञाचक्रान्ते ब्रह्मग्रन्थिभेदनसमये विद्युन्नियुताभा, स्वाधिष्ठानान्ते रुद्रग्रन्थिभेदनसमये वह्निनियुताभा, अनाहतचक्रान्ते विष्णु-ग्रन्थिभेदनसमये द्युमणिनियुताभा इति विवेकः । षडश्रं मूलाधारगर्भितं स्वाधिष्ठानं आदौ भित्त्वा अथ तदनन्तरं दशदलं मणिपूरं भित्त्वा द्वादशदलं अनाहतचक्रं भित्त्वा कलाश्रं विशुद्धिचक्रं भित्त्वा द्व्यश्रं आज्ञाचक्रं भित्त्वा गतवति सहस्रकमलमिति शेषः । हे गिरिसुते ! हिमाचलतनये ! ते नमः ॥

अत्र चतुष्पत्रं मूलाधारं स्वाधिष्ठाने अन्तर्भूतं कौलाः उपासत इति प्रागेव प्रतिपादितम् । समयिनस्तु स्वाधिष्ठानं भित्त्वा मणिपूरं प्रविष्टायाः देव्याः उपासनं कुर्वन्तीति समयमततत्त्वं च प्रतिपादितम् ! अत्रेदमुपह्वरं— षट्कमलेषु मनष्षष्ठं भूतपञ्चकं तादात्म्येनावतिष्ठते। तच्च पिण्डाण्डब्रह्माण्डयोरैक्या-नुसन्धानमहिम्ना षटकमलानुसन्धानमहिम्ना पञ्चविधसाम्यानुसन्धानमहिम्ना षड्विधैक्यानुसन्धानमहिम्ना पिण्डाण्डं ब्रह्माण्डवदवभासत इति सर्वयोगशास्त्र-

रहस्यम् । अत एव योगिना चतुर्विधैक्यानुसन्धानं कर्तव्यमेव । तथा च श्रूयते—

पिण्डब्रह्माण्डयोरैक्यं लिङ्गसूत्रात्मनोरपि ।

स्वापाव्याकृतयोरैक्यं क्षेत्रज्ञपरमात्मनोः ।

अयमर्थः—पिण्डाण्डब्रह्माण्डयोरैक्यं ज्ञातव्यम् । तदनन्तरं लिङ्गात्मसूत्रात्मनोरैक्यं अवगन्तव्यम् । लिङ्गात्मा लिङ्गशरीरं एकादशेन्द्रियगणः तन्मात्रापञ्चकं षोडशकं लिङ्गशरीरम् । सूत्रात्मा ब्रह्माण्डावच्छिन्नो वायुः लिङ्गशरीरस्य अर्चिरादिमार्गप्रापकः । तयोरैक्यमवगन्तव्यम् । स्वापाव्याकृतयोः—स्वापः सुषुप्त्यवस्थापन्नः साक्षी प्राज्ञः अव्याकृतः अविद्याशबलितं ब्रह्म तयोरैक्यम् । क्षेत्रज्ञः जीवः, परमात्मा ब्रह्मस्वरूपं, तयोरैक्यं ज्ञातव्यम् । एवं संप्रदायरहस्यसंक्षेपः । विस्तरस्तु सुभगोदये शारीरके ज्ञातव्यः । अस्मिन् श्लोके सौन्दर्यलहर्या यावत्प्रमेयजातं समयसिद्धान्तरहस्यत्वेन कौलसिद्धान्तरहस्यत्वेन च प्रतिपादितमस्माभिः संक्षेपतः तत्सर्वं सूक्ष्मदृशा महात्मभिरनुसन्धेयमिति सर्वमनवद्यम् ॥ ९९ ॥

**प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः**
**सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।**
**स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं**
**त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥ १०० ॥**

**प्रदीपस्य** करदीपिकायाः, **ज्वालाभिः** कीलाभिः, **दिवसकरस्य** सूर्यस्य, **नीराजनविधिः** नीराजनकृत्यम्, **सुधासूतेः** चन्द्रस्य, **चन्द्रोपलजललवैः** चन्द्रोपलानां चन्द्रकान्तानां जललवैः निष्यन्दैः, **अर्घ्यरचना । स्वकीयैः** आत्मसंबन्धिभिः, एतत्स्वकीयपदं प्रदीपज्वालाभिरित्यादौ व्यत्यये-

नान्वेति स्वकीयाभिरिति । **अम्भोभिः** जलैः, **सलिलनिधिसौहित्यकरणं** समुद्रस्य तृप्तिहेतुः तर्पणविशेषः । **त्वदीयाभिः** त्वदुत्पन्नैः त्वत्स्वरूपैः **वाग्भिः** वाक्यसंदर्भैः **तव** भवत्याः, **जननि !** मतः ! सवित्रीत्यर्थः । **वाचां** वाक्यप्रपञ्चस्य **स्तुतिरियम्** ।

अत्रेत्थं पदयोजना—हे वाचां जननि ! यथा स्वकीयाभिः प्रदीपज्वालाभिः दिवसकरनीराजनविधिः, यथा स्वकीयैश्चन्द्रोपलजललवैः सुधासूतेरर्घ्यरचना भवति, यथा स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं भवति, तथा त्वदीयाभिः वाग्भिरेव तवेयं स्तुतिः ॥

अत्र इयं स्तुतिरिति यदा पूर्वोक्तप्रदीपज्वालादिवाक्यप्रतिपादितार्थसाम्यपरामर्शः तदा प्रतिवस्तूपमालङ्कारः, उपमानोपमेययोर्वस्तुप्रतिवस्तुभावेनान्वयात् । यदा इयं स्तुतिरिति स्वरूपमात्रं परामृश्यते तदा भिन्नवाक्यत्वेन बिम्बप्रतिबिम्बाक्षेपात् दृष्टान्तालङ्कारः । एवं प्रतिवस्तूपमादृष्टान्तालङ्कारयोः अन्वयभेदेन प्रतीयमानत्वात् वाक्यद्वयाश्रयणात् संसृष्टिरेवेति ध्येयम् ॥

अस्मिन् सौन्दर्यलहरीश्लोकशतके 'समानीतः पद्भ्यां'* इति 'समुद्भूतस्थूलस्तनभरम्'† इति 'निधे नित्यस्मेरे'§ इति श्लोकत्रयं वर्तते । तत्तु भगवत्पादरचितं न भवति केनचित्प्रक्षिप्तमिति न व्याख्यातम् । श्लोकशतकमेव व्याख्यातम् ॥ १०० ॥

इति श्रीलोल्लकुलसंप्रदायप्रवर्तकभ्रमराम्बिकावरप्रसादसमुल्लसितमहासारस्वतभट्टलोल्लपतिग्रन्थविवरणकर्तृ श्रीमहोपाध्यायमहादेवाचार्यसप्तमेन साहित्यपारिजातस्मृतिकल्पतरुप्रबन्धप्रबन्धृलक्ष्मीधरार्यषष्ठेन भरतार्णवपोताख्यसाहित्यमीमांसाग्रन्थद्वयप्रणेतृविरिञ्चिमिश्रपञ्चमेन मीमांसाद्वयजीवातुनिर्मातृपुरुषो-

---

* अयं 'अराळा केशेषु' इत्यनन्तरं पठ्यते. † अयं 'गिरिमाहुः' इत्यनन्तरं पठ्यते. § अयं 'सरस्वत्या' इत्यनन्तरं पठ्यते. इमे श्लोकाः प्रथमानुबन्धस्यान्तिमे भागे निर्दिष्टाः ॥

त्तममहोपाध्यायनप्त्रा प्राभाकरामृतवाहिनीप्रभावलीखण्डनाद्यनेकप्रबन्धसन्दर्भ-प्रवर्तकबिरुदपदमहोपाध्यायलक्ष्मणार्यपौत्रेण नयविवेकदीपिकाप्रबन्धसंविधा-तृमहोपाध्यायविद्वत्सार्वभौमनूतनव्यासाद्यनेकबिरुदाङ्कितश्रीविश्वनाथभट्टारकतन-येन अधीतदशशतनयेन पार्वतीगर्भशुक्तिमुक्तारत्नेन बहूकृतधीचिरत्नेन लोल्लकुलकलशाम्बुधिसुधांशुना यशःप्रांशुना हरितगोत्रकल्पशाखिना आपस्तम्ब-शाखिना षड्दर्शनीपारदृश्वना प्रतिपक्षवृक्षजञ्झामातरिश्वना भ्रमराम्बिकाप्रसाद-समासादितप्रतिभाविशेषेण भुवि शेषेण निखिलयामलतन्त्रार्णवावगाहनरुद्रेण आश्रयीकृतगजपतिवीररुद्रेण नीलगिरिसुन्दरचरणारविन्दचञ्चरीकेण वाणीसह-चरीकेण सरस्वतीविलासाद्यनेकस्मृतिनिबन्धनलक्ष्मीधराद्यनेकसाहित्यनिबन्धन-नयविवेकभूषणाद्यनेकगुरुमतनिबन्धनयोगदीपिकाद्यनेकपातञ्जलमतनिबन्धन —महानिबन्धनाख्यमानवधर्मशास्त्रटीकाकर्णावतंससबर्हावतंसाद्यनेककाव्यकल्पकेन आश्रितजनकल्पकेन निग्रहानुग्रहकौशिकेन श्रीमहोपाध्यायलक्ष्मीधरदेशिकेन कृतेयं लक्ष्मीधराख्या सौन्दर्यलहरीस्तुतिव्याख्या ॥

अनया सन्तुष्टा भवतु भगवती भवानी ॥

---

अस्मदीयानां लक्ष्मीधराचार्याणां पद्यम्—

वयमिह पदविद्यां तन्त्रमान्वीक्षकीं वा
यदि पथि विपथे वा वर्तयामः स पन्थाः ।
उपयति दिशि यस्यां भानुमान्सैव पूर्वा
न हि तरणिरुदीते दिक्पराधीनवृत्तिः ॥

सायं सम्फुल्लमल्लीसुमसुरभिसुधामाधुरीसाधुरीति-
प्रेङ्खत्पुङ्खानुपुङ्खस्फुरदमरसरिद्वीचिवाचालवाचः ।
लोल्लश्रीलक्ष्मणाख्यो गुणमणिजलधिर्भासते भूसुराली-
केलीनालीकपालीदशशतकिरणो विद्वदग्रेसरोऽसौ ॥

यस्य सप्तमः—

य: कर्णाटवसुन्धराधिपमहास्थाने सुवर्णायितो
यो विद्वन्निकषायितो नृपगृहे वेमाख्यपृथ्वीशितुः ।
श्रीमल्लोलटभट्टशिष्य इति यो लोल्लाख्यया श्रूयते
श्रीशेषान्वयशेखरः स हि महादेवो विपश्चिन्महान् ॥

तस्योक्तिः—

निकषायितुमीहे वा सुवर्णायितुमेव वा ।
सुवर्णायितुमेवेहे निकषो न ह्यलङ्क्रिया ॥
तर्कन्यक्कृतवावदूकनिचयं वादित्वमास्तां मम
व्याख्यातृत्वमुदारशिष्यनिवहश्लाघ्यं तथा तिष्ठतु ।
स्वर्लोकच्यवमानसिद्धतटिनीकल्लोलसल्लापिनां
उल्लासा वचसां न कस्य मनसां मत्काश्चमत्कारिणः ।
गतोऽयं शङ्कराचार्यो वीरमाहेश्वरो गतः ।
षट्चक्रभेदेने को वा जानीते मत्परिश्रमम् ॥

समाप्तोऽयं ग्रन्थः

---

सूचना—

अथ सौन्दर्यलहरीस्थानां सर्वेषामपि श्लोकानां बीजाक्षरयुतयन्त्रपूजापुरश्चरण-नैवेद्यफलानि केरलाङ्गलभाषयोः संमुद्रय प्रकाशितान्युपलभ्यन्ते खलु। तान्येव ऐहिकफलाकाङ्क्षिणामुपासकानां सौकर्याय संस्कृते परिवर्त्यात्र संयोजितानि। इति विभावनीयम् ॥

# श्री त्रिपुरसुन्दर्यै नमः

अस्य श्रीसौन्दर्यलहरीस्तोत्रस्य गोविन्दः ऋषिः । अनुष्टुप्छन्दः । श्रीमहात्रिपुरसुन्दरी देवता । शिवः शक्त्या युक्त इति बीजम् । सुधासिन्धोर्मध्य इति शक्तिः । जपो जल्पः शिल्पमिति कीलकम् । श्री ललितामहात्रिपुरसुन्दरीप्रीत्यर्थे-जपे विनियोगः ।

ह्रां अङ्गुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां नमः, ह्रूं मध्यमाभ्यां नमः, ह्रैं अनामिकाभ्यां ह्रौं हं, कनिष्ठिकाभ्यां वौषट्, ह्रः करतलकरपृष्ठाभ्यां फट् । ह्रां हृदयाय नमः, ह्रीं शिरसे स्वाहा ह्रं शिखायै वौषट्, ह्रैं कवचाय हुं, ह्रौं नेत्रत्रयाय वौषट् , ह्रः अस्त्राय फट् ॥

## ध्यानम्

लौहित्यनिर्जितजपाकुसुमानुरागां
पाशाङ्कुशे धनुरिषूनपि धारयन्तीम् ।
ताम्रेक्षणामरुणमाल्यविशेषभूषां
ताम्बूलपूरितमुखीं त्रिपुरां नमामि ॥

लं पृथिव्यात्मने गन्धं कल्पयामि, हं आकाशात्मने पुष्पं कल्पयामि, यं वाय्वात्मने धूपं कल्पयामि, रं वह्न्यात्मने दीपं कल्पयामि· वं जलात्मने नैवेद्यं कल्पयामि ॥ ॐ ॥

श्लो. १. (P. 1)




(i) यन्त्रमिदं तण्डुलपिष्टेन स्थण्डिले विलिख्य घृतदीपसंस्थापनपूर्वकं द्वादश दिनानि संपूज्य प्रत्यहं श्लोकमिमं सहस्रमावर्तयेत्। अनेन सकलकार्यजयः।

(ii) इदमेव यन्त्रं हेमपट्टतले विलिख्य पूर्वाभिमुखो द्वादश दिनानि संपूज्य श्लोकमिमं प्रतिदिनं सहस्रमावर्त्य कण्ठे धारयेत्। अनेन सकलाभिवृद्धिः। उभयत्र नैवेद्यं त्रिमधुरम्। त्रिमधुरं नाम गुडनारिकेलकदलीफलानां मिश्रणेन संपादितं द्रव्यम्।

श्लो. २. (P. 4)




यन्त्रमिदं स्वर्णपट्टे विलिख्य, उत्तराभिमुखः पञ्चपञ्चाशद्दिनानि संपूज्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत्। अनेन सर्वलोकवश्यता प्रकृतिजयश्च। नैवेद्य क्षीरपायसम्।

श्लो. ३. (p. 6.)




(i) इदं यन्त्रं कनकपट्टतले विलिख्य ईशानाभिमुखः पञ्चदश दिनानि संपूज्य श्लोकमिमं प्रत्यहं सहस्रमावर्त्य धारयेत्। अनेन सर्वैश्वर्यविद्ये भवतः।

(ii) इदमेव यन्त्रं चतुःपञ्चाशद्दिनानि पूर्ववदभ्यर्च्य प्रतिवासरं श्लोकमिमं द्विसहस्रमावर्त्य साधयेत्। साधको वेदविद्भवेत्। उभयत्र नैवेद्य—माषापूपः।

श्लो. ४. (P. 8)




(i) यन्त्रमिदं रजतपट्टे विलिख्य पूर्वाभिमुखः षोडश दिनान्यभ्यर्च्य श्लोकमिमं प्रतिदिनं सहस्रमावर्त्य धारयेत् । फलं—साम्राज्यसिद्धिः ।

(ii) इदमेव यन्त्रं षट्त्रिंशद्दिनानि पूर्ववदभ्यर्च्य श्लोकमिमं प्रत्यहं सहस्रमावर्तयेत् । अनेन साधकं दारिद्र्यरोगादयो न बाधन्ते । उभयत्र नैवेद्यं—हरिद्रान्नम् । अत्र केरलभाषापुस्तके श्रीमिति बीजाक्षरं दृश्यते ।

श्लो. ५. (P. 9)




इदं यन्त्रं ताम्रपपट्टे विलिख्य वायव्याभिमुखोऽष्टौ दिनानि संपूज्य प्रत्यहं श्लोकमिमं द्विसहस्रमावर्त्य शिरसि धरयेत् । फलं सकलजनसंमोहनं स्त्रीणां पुरुष-वश्यता च । नैवेद्यं—गुडपायसम् ।

श्लो. ६. (P. 12)




यन्त्रमिदं कनकपट्टतले विलिख्य पूर्वाभिमुखः एकाविंशतिदिनानि समाराध्य पद्यमिदं प्रतिदिनं पञ्चशतमावर्त्य धारयेत् । फलं—साधकस्य षण्डत्वनिवृत्त्या पुत्रावाप्तिः । नैवेद्यं—इक्षुखण्डः ।

श्लो. ७. (P. 14)




यन्त्रमिदं हाटकपट्टे विलिख्य पूर्वाभिमुखः पञ्चचत्वारिंशद्दिनानि समभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य शिरसि धारयेत् । भस्म वाऽभिमन्त्र्य धारयेत् । अनेन शत्रुजयः । नैवेद्यं क्षीरपायसम् ।

श्लो. ८. (P. 15)




यन्त्रमिदं रक्तचन्दनखण्डे निर्माय द्वादश दिनानि रक्तपुष्पैरभ्यर्च्य पद्यमिदं प्रत्यहं द्विशतोत्तरसहस्रमावर्त्य धारयेत् । फलं कारागृहनिवृत्तिः सकलकार्यजयश्च । नैवेद्यं कृष्णमरिचः ।

श्लो. १९. (P. 18)




(i) यन्त्रमिदं कनकपट्टे विलिख्य दश दिनान्यभ्यर्च्य प्रत्यहं श्लोकमिमं सहस्रमावर्तयेत् । फलं—देशान्तरगतस्य क्षिप्रागमनम् ।

(ii) इदमेव यन्त्रं गन्धचोलिकयालिप्य पञ्चचत्वारिंशद्दिनानि स ाराध्य पद्यमिदं प्रतिवासरं सहस्रमावर्तयेत् । अनेन साधकः पञ्चभूतानि जयिष्यति । उभयत्र नैवेद्यं क्षीरपायसम् ।

श्लो. २०. (P. 22)




इदं यन्त्रं हाटकपट्टतले विलिख्य षड्दिनान्यभ्यर्च्य प्रतिदिनं श्लोकमिमं सहस्रमावर्त्य रक्तक्षौमतन्तौ निबध्य धारयेत् । फलं—वृष्यं स्त्रीणां रजोदर्शनं च । नैवेद्यं—कदलीफलम् ।

श्लो. ११. (P. 26)




इदं यन्त्रं कनकपट्टतले विलिख्य एकाशीतिदिनानि संपूज्य श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत् । नवनीतं वाऽभिमन्त्र्य सेवयेत् । अनेन वन्ध्यादोषो निवर्तते । नैवेद्यं—गुडपायसम् ।

श्लो. १२. (P. 44)




यन्त्रमिदं जले विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य जलं स्पृष्ट्वा श्लोकमिमं प्रत्यहं सहस्रमावर्त्य पिबेत् । अनेन मूकोऽपि कविर्भवेत् , वशित्वं सिध्येत् । नैवेद्यं—मधु ।

श्लो. १३. (P. 45)

क्लीं क्लीं क्लीं
साध्यम्
क्लीं क्लीं क्लीं

इदं यन्त्रं हेमपट्टे विलिख्य षड्दिनानि समाराध्य श्लोकमिममनुदिनं सहस्र-मावर्त्य धारयेत् । फलं स्त्रीवश्यता । नैवेद्यं—त्रिमधुरम् ।

श्लो. १४. (P. 46)




यन्त्रमिदं हाटकपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत् । अनेन वसन्तादिरोगाः दुर्भिक्षं च न बाधेत । नैवेद्यं—क्षीरपायसम् ।

श्लो. १५. (P. 51)




(i) यन्त्रमिदं सुवर्णपट्टे विलिख्य एकचत्वारिंशद्दिनानि संपूज्य श्लोकमिमं प्रत्यहं सहस्रमावर्त्य धारयेत् । अनेन साधकः कविर्विज्ञानी च भवेत् ।

(ii) इदमेव यन्त्रं जले विलिख्य पूर्ववत्संपूज्य जप्त्वा पिवेत् । फलं— पूर्ववत् । उभयत्र नैवेद्यं—मधु कदलीफलं शर्करा च ।

श्लो. १६. (P. 52)




यन्त्रमिदं हेमपट्टतले विलिख्य एकचत्वारिंशदहानि समाराध्य श्लोकमिमनुदिनं सहस्रमावर्त्य धारयेत् । फलं—वेदशास्त्रादिज्ञानम् । नैवेद्य—मधु ।

श्लो. १७. (P. 54)




इदं यन्त्रं हाटकपट्टे विलिख्य एकनवतिदिनान्यभ्यर्च्य श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत्। अनेन साधकः सकलकलाकोविदो भवेत्। नैवेद्यं—मधु कदलीफलं क्षीरं शर्करा खण्डशर्करा च।

श्लो. १८. (P. 57)




यन्त्रमिदं सुवर्णपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनान्यर्चयित्वा प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धरयेत्। चन्दनं कुङ्कुमं पुष्पं वाऽभिमन्त्र्य दद्यात् फलं—सकलप्राणिवश्यता। नैवेद्यं—क्षीरपायसं ताम्बूलं च।

श्लो. १९. (P. 58)




इदं यन्त्रं हेमपट्टतले विलिख्य पञ्चविंशतिदिनान्याराध्य श्लोकमिमं प्रतिवासरं द्विशताधिकसहस्रमावर्त्य धारयेत् । चन्दनं पुष्पं भस्म कुङ्कुमं वाऽभिमन्त्र्य धारयेत् । अनेन सकलराजराक्षसमृगस्त्रीवश्यता भवति । नैवेद्यं—क्षीरं मधु कदलीफलं च ।

श्लो. २०. (P. 20)




(i) यन्त्रमिदं भस्मनि विलिख्य श्लोकमिमं सहस्रमावर्त्य तद्भस्म दद्यात् । अनेन विषनिवृत्तिर्भवति । इदं भस्म सर्पे लग्नं चेत् मुह्यात् । ज्वराश्च निवर्तेत ।

(ii) इममेव श्लोकं पञ्चचत्वारिंशद्दिनानि प्रत्यहं द्विसहस्रमावर्त्य साधयेत् । अनेन साधकस्य कदापि विषभीतिर्न जायते ।

(iii) इदमेव यन्त्रं मयूरताम्रेण पुन्नागताम्रेण वा मिश्रितसुवर्णपट्टतले विलिख्य श्लोकमिमं पूर्ववत्संसाध्य तद्यन्त्रमङ्गुलीयकं कृत्वा धारयेत् । तद्धस्तेन सर्पदष्टे जले प्रोक्षिते विषनिवृत्तिर्भवति ।

श्लो. २१. (P. 21)




यन्त्रमिदं स्वर्णपट्टे रजतपट्टे ताम्रपट्टे वा विलिख्य पञ्चचत्वारिंशदहानि पूजयित्वा श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत्। अनेन सकलजनविरोधनाशः वश्यता च। नैवेद्यं—कदलीफलं मधु गुडं च।

श्लो. २२. (P. 63)



चक्रमिदं सुवर्णपट्टतले विलिख्य कस्मिंश्चित्पुण्यतीर्थे क्षेत्रे देवीसन्निधौ वा उपविश्य पञ्चचत्वारिंशदहानि संपूज्य श्लोकमिममहरहस्सहस्रमावर्त्य साधयेत् । अनेन ऐहिकसर्वाभीष्टसिद्धिः सकलैश्वर्यप्राप्तिः साम्राज्यावाप्तिश्च भवति । नैवेद्यं—मधु त्रिमधुरं दधि क्षीरं चित्रान्नं च ।

श्लो. २३. (P. 64)




यन्त्रमिदं हेमपट्टे विलिख्य गृहे संस्थाप्य त्रिंशद्दिनान्यभ्यर्च्य प्रत्यहं श्लोकमिमं त्रिसहस्रमावर्तयेत् । फलं—सर्वापन्निवृत्तिः ऋणमोचनं भूतप्रेतशमनं च भवति । नैवेद्यं—क्षीरपायसम् ।

श्लो. २४. (P. 65)

| न | शि | य | मः | वा |
|---|---|---|---|---|
| य | मः | वा | न | शि |
| वा | न | शि | य | मः |
| शि | य | मः | वा | न |
| मः | वा | न | शि | य |

शिवयन्त्रमिदं हाटकपट्टतले विलिख्य त्रिंशद्दिनानि सम्पूज्य श्लोकमिममहरहस्स-हस्रमावर्त्य धारयेत् । फलं-भूतप्रेतपिशाचापस्मारादिनिवारणम् । नैवेद्यं मधु माषा-पूपः तिलपिष्टं च ।

श्लो. २५. (P. 66)




इदं यन्त्रं हेमपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य श्लोकमिमं सहस्र-मावर्त्य धारयेत् । फलं– राजकीयाधिकारः उत्कृष्टपदवीलाभश्च । नैवेद्यं—मधु ।

श्लो. २६. (P. 67)




(i) यन्त्रमिदं सुवर्णपट्टतले विलिख्यार्चयित्वमावास्यायां श्लोकमिमं सहस्रमावर्त्य धारयेत् । फलं—सर्वसिद्धिः ।

(ii) इदमेव यन्त्रं षड्दिनानि पूजयित्वाऽनुदिनं श्लोकमिमं सहस्रमावर्तयेत् । अनेन शत्रुजयो भवति । उभयत्र नैवेद्यं—गुडपायसम् ।

श्लो. २७. (P. 68)




इदं यन्त्रं हेमपट्टे लिखित्वा पञ्चचत्वारिंशदहानि पूजयित्वा श्लोकमिममहरहः सहस्रमावर्त्य धारयेत् । फलम्—मन्त्रसिद्धिः देवीदर्शनं आत्मज्ञानं च । नैवेद्यं—गुडपायसम् ।

श्लो. २८. (P. 70)




यन्त्रमिदं हाटकपट्टे विलिख्य पञ्चचत्वारिंशद्दिनानि समाराध्य प्रत्यहं श्लोकमिमं सहस्त्रमावर्त्य धारयेत्। फलं-स्त्रीणां सकलकार्यसिद्धिः पुरुषाणामपमृत्युनिवारणं च। नैवेद्यं—क्षीरपायसं त्रिमधुरं ताम्बूलं च।

श्लो. २९. (P. 70)




इदं यन्त्रं हेमपट्टे विलिख्य पञ्चचत्वारिंशद्दिनान्यर्चयित्वा श्लोकमिमं प्रतिवासरं सहस्त्रमावर्त्य धारयेत्। फलं—दुष्टान् मूर्खांश्च सतः कृत्वा स्ववशीकरणम्। नैवेद्यं—मधु माषापूपश्च।

श्लो. ३०. (P. 71)




यन्त्रमिदं कनकपट्टतले विलिख्य षण्णवतिदिनानि समाराध्य श्लोकमिममह-रहस्सहस्रमावर्त्य धारयेत् । फलं—अणिमाद्यष्टसिद्धिः परकायप्रवेशः अग्निस्तम्भनं च। नैवेद्यं—मधु त्रिमधुरं ताम्बूलं च ।

श्लो. ३१. (P. 72)



चक्रमिदं हाटकपट्टे विलिख्य पञ्चचत्वारिंशदहान्यर्चयित्वा हस्ते निधाय श्लोक-मिममनुदिनं सहस्रमावर्तयेत् । अनेन सकलजनवश्यं राजवश्यं च भवेत् । नैवेद्यं—मधु क्षीरं च ।

श्लो. ३२. (P. 81)




इदं यन्त्रं स्वर्णपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि संपूज्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत्। फलं—सकलविद्यासिद्धिः रसायनसिद्धिश्च। नैवेद्यं—दध्यन्नं माषापूपश्च। (अत्र केरलभाषापुस्तके यमिति बीजाक्षरं न दृश्यते।)

श्लो. ३३. (P. 98)




यन्त्रमिदं कनकपट्टतले विलिख्य तत्र रौप्यकं निधाय पञ्चचत्वारिंशद्दिनानि संपूज्य श्लोकमिममनुदिनं सहस्रमावर्तयेत्। फलं-भूरिधनावाप्तिः। नैवेद्यं मुद्गान्नं मधु।

श्लो. ३४. (P. 100)




यन्त्रमिदं हेमपट्टे विलिख्य पञ्चचत्वारिंशदहान्यभ्यर्च्य पद्यमिदं प्रत्यहं सहस्रवारं जप्त्वा धारयेत् । अनेन साधकः महाबुद्धिमान् भवेत् । नैवेद्यं—मधु ।

श्लो. ३५. (P. 105)




इदं यन्त्रं स्वर्णपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयित्वा हरीतकीमभिमन्त्र्य सेवयेत् । अनेन क्षयरोगो निवर्तते । नैवेद्यं—मधु क्षीरपायसं च ।

श्लो. ३६. (P. 107)




यन्त्रमिदं कनकपट्टे विलिख्य पञ्चचत्वारिंशदहान्यर्चयित्वा पद्यमिदमहरहः सहस्रवारं जप्त्वा धारयेत् रोगशान्तये जलं वाऽभिमन्त्र्य पाययेत् । फलं नानाविधकठिण-रोगनिवृत्तिः नैवेद्यं—मधु माषापूपश्च ।

श्लो. ३७. (P. 108)




इदं यन्त्रं जातरूपपट्टे विलिख्यार्चयित्वा पद्यमिदं पञ्चसहस्रमावर्त्य धारयेत् । जलं वाभिमन्त्र्य पिबेत् । फलं—ब्रह्मरक्षोबाधानिवृत्तिः । नैवेद्यं—गुडपायसं नारि-केलफलं कदलीफलं च ।

श्लो. ३८. (P. 109)




यन्त्रमिदं हेमपट्टे विलिख्य पञ्चचत्वारिंशद्दिनानि पूजयित्वाऽनुदिनं श्लोकमिमं सहस्रवारं जप्त्वा धारयेत्। जलं वाऽभिमन्त्र्य प्रोक्षयेत्। फलं बालारिष्टनिवृत्तिः। नैवेद्यं—११ माषापूपाः ताम्बूलं नारीकेलफलं कदलीफलं च।

श्लो. ३९. (P. 111)




यन्त्रमिदं कनकपट्टतले विलिख्य द्वादशदिनान्यभ्यर्च्य प्रत्यहं श्लोकमिममष्टोत्तरशतमावर्त्य धारयेत्। अनेन दुस्स्वप्नं शाम्यति। नैवेद्यं—क्षीरं क्षीरपायसं मधु च।

श्लो. ४०. (P. 112)




इदं यन्त्रं हेमपट्टे विलिख्य पञ्चचत्वारिंशदहान्यर्चयित्वा पद्यमिदमनुदिनं सहस्र-मावर्त्योपधाने निक्षिप्य शयीत। फलं—इष्टार्थस्य स्वप्ने दर्शनम्। नैवेद्यं—मधु क्षीरपायसं ताम्बूलं च।

श्लो. ४१. (P. 115)




यन्त्रमिदं हेमपट्टतले विलिख्य त्रिंशदहानि पूजयित्वा पद्यमिदमहरहश्चतु-स्सहस्रमावर्त्य धारयेत्। फलं—सकलोदररोगनिवृत्तिः नैवेद्यं—मधु।

श्लो. ४२. (P. 124)




इदं यन्त्रं स्वर्णपट्टे विलिख्य पञ्चत्वारिंशद्दिनानि समाराध्य श्लोकमिममनुदिनं सहस्रवारं जप्त्वा धारयेत् । अनेन महोदरव्याधिर्नश्यति । नैवेद्यं—शर्करा ।

श्लो. ४३. (P. 126)




यन्त्रमिदं हाटकपट्टे विलिख्य चत्वारिंशदहान्यभ्यर्च्य पद्यमिदमनुदिनं त्रिसहस्रमावर्त्याङ्गुलीयकं कृत्वा धारयेत् । फलं—सकलजनवश्यता । नैवेद्यं—मधु ।

श्लो. ४४. (P. 127)




यन्त्रमिदं कनकपट्टतले विलिख्य द्वादशाहान्यर्चयित्वा श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत् । कुङ्कुमं हरिद्राचूर्णं वाऽभिमन्त्र्य तिलकं धारयेत् । अनेन वश्यता बाधानिवृत्तिश्च भवेत् । नैवेद्यं—गुडपायसम् ।

श्लो. ४५. (P. 128)




इदं यन्त्रं स्वर्णपट्टतले विलिख्य चत्वारिंशदहानि समाराध्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत् । फलं—वाक्सिद्धिः । नैवेद्यं—त्रिमधुरं मधु च ।

श्लो. ४६. (P. 129)




यन्त्रमिदं कनकपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि संपूज्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत् । अनेन भर्तृसमागमो गर्भधारणं च भवति । नैवेद्यं—क्षीरपायसं—मधु च ।

श्लो. ४७. (P. 131)




(i) इदं सुवर्णपट्टे विलिख्य पञ्चविंशतिदिनानि संपूज्य पद्यमिदमनुदिनं सप्तसहस्रमावर्त्य धारयेत् । अनेन देवता वशमेष्यति ।

(ii) भस्म वाऽभिमन्त्र्य धारयेत् । फलं—सकलवश्यता । उभयत्र नैवेद्यं—नारिकेलफलं कदलीफलं मधु च ।

श्लो. ४८. (P. 133)

| | | |
|---|---|---|
| बु | शु | च |
| गु | र | कु |
| रा | श | के |

यन्त्रमिदं कनकपट्टतले विलिख्य एकोनविंशतिदिनानि समाराध्य श्लोकमिमं सहस्रवारं जप्त्वा धारयेत् । अनेन नवग्रहदोषशान्तिर्भवति । नैवेद्यं—चित्रान्नं कदलीफलं मधु च ।

श्लो. ४९. (P. 134)




यन्त्रमिदं हरिद्राखण्डे लिखित्वा पञ्चविंशतिदिनान्यभ्यर्च्य श्लोकमिममहरहस्सहस्रमावर्त्य हरिद्राखण्डमग्नौ दग्ध्वा तत्तैलेन पिष्ट्वा पञ्चदशवर्षीयस्य मार्जालदृशो बालकस्य हस्तेन अक्ष्णोर्लेपयित्वा पश्यतो निधिदर्शनं भवति । नैवेद्यं—मुद्गान्नं मधु च ।

श्लो. ५०. (p. 135)



इदं यन्त्रं कनकपट्टतले विलिख्य चत्वार्यहान्यर्चयित्वा पद्यमनुदिनं सहस्रवारं जप्त्वा धारयेत् । जलं वाभिमन्त्र्य सेवेत । एवं कृते मसूरिका न समागमिष्यति । नैवेद्यं—शर्करा खण्डशर्करा गुडं कदलीफलं मधु नारिकेलं च ।

श्लो. ५१. (P. 137)




यन्त्रमिदं सुवर्णपट्टे विलिख्य, पञ्चचत्वारिंशदहानि संपूज्य प्रत्यहं श्लोकमिमं सहस्रवारं जप्त्वा धारयेत् । चन्दने वा विलिख्य पूर्ववत्पूजादिकं कृत्वा तिलकं धारयेत् । फलं—सर्वजनवश्यता । नैवेद्यं—माषापूपः मधु च ।

श्लो. ५२. (P. 138)




इदं यन्त्रं कलकपट्टतले विलिख्य पञ्चचत्वारिंशदहानि समाराध्य श्लोकमिम-मनुदिनं सहस्रमावर्त्य धारयेत् । फलं—कर्णरोगशमनं नेत्ररोगनिवृत्तिश्च । नैवेद्यं—तिलान्नं क्षीरपायसं च ।

श्लो. ५३. (P. 139)




यन्त्रमिदं स्वर्णपट्टे विलिख्य भूमौ संस्थाप्य तत्र दीपं निधाय श्लोकमिमं त्रिसहस्रमावर्तयेत् । अनुकूलतायां दीपं उज्ज्वलेत् न चेत्प्रातिकूल्यम् । नैवेद्य—गुडापूपः माषापूपः क्षीरपायसं च ।

श्लो. ५४. (P. 141)




यन्त्रमिदं कनकपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि संपूज्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत् । अनेन योनिरोगो निवर्तते । नैवेद्यं—गुडपायसम् ।

श्लो. ५५. (P. 142)




इदं यन्त्रं हाटकपट्टे विलिख्य पद्यमिदं सहस्रवारं जप्त्वा धारयेत् । कलिद्रुमफलं वाऽभिमन्त्र्य बध्नीयात् । अनेनाण्डव्याधिश्शाम्यति । नैवेद्यं कदलीफलं क्षीरपायसं मधु ताम्बूलं च । (अत्र केरलभाषापुस्तके " बंला संला " इति बीजाक्षरभेदो दृश्यते ।)

श्लो. ५६. (P. 143)




यन्त्रमिदं जातरूपपट्टतले मकरमत्स्यदन्ते वा लिखित्वा पञ्चचत्वारिंशदहान्यभ्यर्च्य श्लोकमिमं प्रत्यहं विंशतिसहस्रमावर्त्य स्वस्मिन्निवेशयेत् । अनेन द्वारपालको धावेत् । मुद्रितं कवाटं स्वयमुद्घाटयेत् । वृष्टिश्च भवेत् । नैवेद्यं—मधु ।

श्लो. ५७. (P. 144)




इदं यन्त्रं हेमपट्टे विलिख्य षडहान्यभ्यर्च्य पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत् । साधको बहुभाग्यवान् भवेत् । नैवेद्यं—क्षीरपायसं मधु च ।

श्लो. ५८. (P. 145)




यन्त्रमिदं कुङ्कमचूर्णे लिखित्वा पञ्चचत्वारिंशद्दिनानि समाराध्य श्लोकमिममनुदिनं सहस्रवारं जप्त्वा तिलकं धारयेत् । फलं— सकलराजवश्यता सर्वव्याधिहृतिश्च । नैवेद्यं—मधु ।

श्लो. ५९. (P. 146)




इदं यन्त्रं स्वर्णपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि संपूज्य पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत् । फलं—सकलजनवश्यता । नैवेद्यं—गुडोदनं मधु च ।

श्लो. ६०. (P. 147)




यन्त्रमिदं हाटकपट्टे विलिख्य पञ्चचत्वारिंशदहान्यभ्यर्च्य श्लोकमिममहरहस्सहस्र-मावर्त्य धारयेत् । अनेन साधकः सकलविद्यामाप्नुयात् । नैवेद्यं मधु क्षीरपायसं च ।

श्लो. ६१. (P. 148)




इदं यन्त्रं कनकपट्टे विलिख्याष्टौ दिनानि समाराध्य पद्यमिदमनुदिनं द्वादश-सहस्रमावर्त्य स्त्रीणामाभरणे निक्षिपेत् । अनेन सकलपुरुषवश्यता भवेत् । नैवेद्यं—नारिकेलफलं कदलीफलं मधु च ।

श्लो. ६२. (P. 149)




यन्त्रमिदं हेमपट्टतले लिखित्वाष्टौ दिनानि संपूज्य श्लोकमिमं प्रत्यहमष्टसहस्रवारं जप्त्वा रात्रौ निद्राविहीनस्य समीपे स्थापितं चेत् स निद्रां लभते । नैवेद्यं—माषापूपः मधु च ।

श्लो. ६३. (P. 150)




यन्त्रमिदं हाटकपट्टतले विलिख्य त्रिंशद्दिनान्याराध्य पद्यमिदमनुदिनं त्रिंशत्सहस्रवारं जप्त्वा धारयेत् । अनेन सर्वोऽपि यथोक्तमाचरेत् । नैवेद्यं—नारिकेलफलम् । (केरलभाषापुस्तके यन्त्रमिदं न दृश्यते ।)

श्लो. ६४. (P. 151)




इदं यन्त्रं कुङ्कमे विरच्याष्टावहानि पूजयित्वा प्रत्यहं श्लोकमिममयुतवारं जप्त्वा धारयेत् । फलं—सकलजनवश्यता । नैवेद्यं—गुडपायसं मधु च ।

श्लो. ६५. (P. 152)




यन्त्रमिदं हेमपट्टतले विलिख्य गुग्गुलेन धूपयित्वा पञ्चचत्वारिंशद्दिनानि रक्तपुष्पैः श्रीचक्रवदभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत् । अनेन सर्वोऽपि स्ववशगो भवेत् । नैवेद्यं—मधु ।

श्लो. ६६. (P. 154)




इदं यन्त्रं कनकपट्टतले लिखित्वा पञ्चचत्वारिंशद्दिनानि समाराध्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत् । अनेन साधकः वीणादिसङ्गीतविद्याकुशलो भवेत् । नैवेद्यं—गुडपायसं मधु च ।

श्लो. ६७. (P. 155)




यन्त्रमिदं स्वर्णपट्टतले विलिख्य पत्न्या साकं पञ्चचत्वारिंशदहानि समाराध्य पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत् । फलं—सकलस्त्रीवश्यता । नैवेद्यं—मधु क्षीरपायसं ताम्बूलं च ।

श्लो. ६८. (P. 156)




इदं यन्त्रं कुंकुमे विलिख्य पञ्चचत्वारिंशद्दिनानि श्रीचक्रवदभ्यर्च्य प्रत्यहं श्लोकमिमं सहस्रवारं जप्त्वा धारयेत् । फलं सकलराजवश्यता । नैवेद्यं - मधु तांबूलं च। (केरळभाषापुस्तके यन्त्रमिदं नास्ति ।)

श्लो. ६९. (P. 157)




यन्त्रमिदं स्वर्णपट्टतले लिखित्वा पञ्चचत्वारिंशद्दिनानि समाराध्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य साधयेत् । चम्पकपुष्पमभिमन्त्र्याभिलषितस्त्रियै दद्यात् । सा वशमेष्यति । नैवेद्यं—मधु । (केरलभाषापुस्तके यन्त्रमिदं न दृश्यते ।)

श्लो. ७०. (P. 159)




इदं यन्त्रं कनकपट्टे विलिख्य पञ्चचत्वारिंशद्दिनानि समभ्यर्च्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। फलं — सकलपुरुषवश्यता। नैवेद्यं — नारिकेलफलं मधु च।

श्लो. ७१. (P. 160)




यन्त्रमिदं हाटकपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि पूजयित्वा वटवृक्षे उपविश्य पद्यमिदमनुदिनं द्वादशसहस्रमावर्त्यं साधयेत्। अनेन यक्षिणी वशमेष्यति। नैवेद्यं — मधु।

श्लो. ७२. (P. 161)




इदं यन्त्रं कनकपट्टतले विलिख्य पञ्चचत्वारिंशदहान्यर्चयित्वा श्लोकमिमं प्रत्यहं सहस्रमावर्त्य धारयेत्। एवं कृते साधकः रात्रौ यत्र कुत्र वा गन्तुं शक्नुयात्! भयलेशोऽपि नास्ति। नैवेद्यं — मधु।

श्लो. ७३. (P. 162)




इदं यन्त्रं कनकपट्टे विलिख्य सप्तदिनान्यभ्यर्च्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। फलं—स्त्रीणां स्तन्याभावे स्तन्यप्राप्तिः, धेनूनां स्थगितस्य पयसो वहिर्निस्सरणं च। नैवेद्यं — मधु क्षीरं च।

श्लो. ७४. (P. 164)




यन्त्रमिदं हेवपट्टतले विलिख्य देवसन्निधौ पञ्चचत्वारिंशदहानि समाराध्य श्लोकमिमं प्रतिवासरमष्टोत्तरशतमावर्त्य धारयेत् । अनेन साधकः कीर्तिमाप्नुयात् । नैवेद्य—क्षीरपायसं मधु च ।

श्लो. ७५. (P. 165)




इदं यन्त्रं हाटकपट्टतले विलिख्य त्रीणि दिनान्याराध्य श्लोकमिमं प्रत्यहं सहस्रवारं जप्त्वा धारयेत । अनेन साधकः कविर्भवेत् । नैवेद्यं—कदलीफलं मधु च ।

श्लो. ७६. (P. 166)




यन्त्रमिदं स्वर्णपट्टतले लिखित्वाऽष्टौ दिनान्यर्च्य पद्यमिदमनुदिनं द्वादशसहस्रमावर्त्य धारयेत् । फलं—सकलजनवश्यता । नैवेद्यं—नारिकेलफलं कदलीफलं दध्यन्नं मधु च ।

श्लो. ७७. (P. 167)




कपिलागोघृतमर्दितरक्तोत्पलेङ्गाले यन्त्रमिदं श्लोकं च विलिख्य दश दिनानि संपूज्य श्लोकमिममनुदिनं द्विसहस्रमावर्त्य तिलकं धारयेत् । फलं—राजवश्यता । नैवेद्यं—कदलीफलं मधु च ।

श्लो. ७८. (P. 168)




रक्तचन्दनं पन्नीराख्यपुष्पद्रवेण विघृष्य गन्धचेलिकामिश्रिते तस्मिन् यन्त्रमिदं विरच्य चत्वारिंशद्दिनानि संपूज्य पद्यमिदमनुदिनमष्टोत्तरशतमावर्त्य ललाटे धारयेत्, अनेन सकलराजवश्यता भवेत् । नैवेद्यं—मधु माषापूपश्च ।

श्लो. ७९. (P. 169)




यन्त्रमिदं हेमपट्टे विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य पद्यमिदं प्रत्यहं सहस्रवारं जप्त्वा धारयेत् । साधकः इन्द्रजालविद्यानिपुणो भवेत् । नैवेद्यं—मधु क्षीरपायसं च ।

श्लो. ८०. (P. 170)




इदं यन्त्रं कनकपट्टतले लिखित्वा प्रथमपुष्पिण्या योनौ संस्थाप्य पञ्चदिनान्यर्चयित्वा पद्यमिदमनुदिनं सहस्रमावर्त्य हस्ते निबध्य तिलकं धारयेत् । अनेन साधकः इन्द्रजालं दर्शयितुं समर्थो भवेत् । नैवेद्यं—मधु ।

श्लो. ८१. (P. 171)




यन्त्रमिदं हाटकपट्टतले लिखित्वाऽऽग्नेयाभिमुखः षोडश दिनानि समाराध्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य साधयेत् । अनेन अग्निस्तम्भनं कर्तुं शक्यते । नैवेद्यं—गुडपायसं मधु माषापूपश्च ।

श्लो. ८२. (P. 173)




इदं यन्त्रं भूर्जपत्रे लिखित्वा पादुकायां निक्षिप्य चत्वारिंशदहानि संपूज्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा तत्पादुकां धारयेत् । अनेन साधको जले चरितुं समर्थो भवेत् । नैवेद्य—नारीकेलफलं कदलीफलं मधु च ।

श्लो. ८३. (P. 175)




यन्त्रमिदं कनकपट्टे विलिख्य द्वादशदिनानि जपाकुसुमैरभ्यर्च्य पद्यमिदमहरहः स्सहस्रमावर्त्य धारयेत् । फलं — गजतुरगसैन्यस्तम्भनम् । नैवेद्यं — गुडपायसं मधु च ।

श्लो. ८४. (p. 176)




इदं यन्त्रं हेमपट्टतले लिखित्वा संवत्सरमेकमभ्यर्च्य श्लोकमिमं प्रत्यहं सहस्र-वारं जप्त्वा धारयेत्। एवं कृते साधकः परकायप्रवेशे शक्तो भवेत्। नैवेद्यं—क्षीर-पायसं चित्रान्नं मधु च।

श्लो. ८५. (P. 177)




यन्त्रमिदं स्वर्णपट्टतले लिखित्वा द्वादशाहानि रक्तपुष्पैः संपूज्य पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत्। अनेन भूतबाधानिवृत्तिः। नैवेद्यं—क्षीरपायसं गुडोदकं कदलीफलं च।

श्लो. ८६. (P. 179)




इदं यन्त्रं हाटकपट्टे विलिख्य एकविंशतिदिनानि संपूज्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत्। कलशोदकमभिमन्त्र्याभिषिञ्चेत्। अनेन समस्तपिशाचबाधानिवृत्तिः। नैवेद्यं - क्षीरपायसं नारीकेलफलं कदलीफलं मधु च।

श्लो. ८७. (P. 180)




यन्त्रमिदं श्मशानभस्मनि विरच्य दशदिनान्याराध्य पद्यमिदमहरहः सहस्र-मावर्त्य साधयेत्। साधकः सर्पानयने समर्थो भवेत्। नैवेद्यं—क्षीरपायसं मधु कदलीफलं नारीकेलफलं च।

श्लो. ८८. (P. 181)




इदं यन्त्रं स्वर्णपट्टे रजतपट्टे वा लिखित्वा पञ्चदशदिनानि समाराध्य श्लोक-मिमं प्रत्यहं सहस्रवारं जप्त्वा धारयेत्। साधकः मृगानयने प्रभवति। नैवेद्य—गुडपायसं नारिकेलफलं कदलीफलं च।

श्लो. ८९. (P. 182)




यन्त्रमिदं हाटकपट्टतले लिखित्वा त्रिंशदहान्यर्चयित्वा पद्यमिदमनुदिनं सहस्र-मावर्त्य धारयेत्। फलं—सर्वरोगशमनम्। नैवेद्यं—गुडपायसं मधु च।

श्लो. ९०. (P. 183)




इदं यन्त्रं हाटकपट्टे लिखित्वा पञ्चदशाहान्यभ्यर्च्य श्लोकमिममहरहस्सहस्र-मावर्त्य धारयेत्। फलं—क्षुद्रबाधानिवृत्तिः नैवेद्यं—क्षीरपायसं मधु च।

श्लो. ९१. (P. 184)




यन्त्रमिदं पद्यं च कनकपट्टतले लिखित्वा पञ्चविंशत्यहानि समाराध्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। साधकस्य भूलाभो धनलाभश्च भवति। नैवेद्यं—क्षीरपायसम्।

श्लो. ९२. (P. 185)




इदं यन्त्रं सुवर्णपट्टे विलिख्य पञ्चविंशतिदिनान्यभ्यर्च्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत्। अनेन साधको राज्यं लभते। नैवेद्य—चित्रान्नं क्षीरं क्षीरपायसं ताम्बूलं च।

Digitized by Madhuban Trust, Delhi



श्लो. ९३. (P. 186)




यन्त्रमिदं हेमपट्टतले विलिख्य पञ्चविंशतिदिनानि पूजयित्वा पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत् । अनेन सकलाभीष्टसिद्धिर्भवति । नैवेद्य—मधु ।

श्लो. ९४. (P. 187)




इदं यन्त्रं हाटकपट्टे लिखित्वा पञ्चविंशत्यहान्यभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्तयेत् । फलं—इष्टार्थसिद्धिः । नैवेद्य—मुद्गान्नं नारिकेलफलं कदलीफलं च ।

श्लो. ९५. (P. 188)




यन्त्रमिदं कनकपट्टतले विलिख्य तिलतैले निक्षिप्य त्र्यहमाराध्य पद्यमिदमनुदिनमष्टोत्तरशतमावर्त्य तत्तैलं व्रणे विलिम्पेत्। फलं — सद्योव्रणविरोपणम्। नैवेद्यं—तिलान्नं गुडं च।

श्लो. ९६. (P. 189)




इदं यन्त्रं श्वेतार्कक्षीरेण धारणयोग्ये कस्मिंश्चिद्वस्तुनि लिखित्वाऽष्टौ दिनानि संपूज्य श्लोकमिमं प्रत्यहं सहस्रवारं जप्त्वा धारयेत्। साधको विद्यावान् भवेत्। नैवेद्यं—मधु क्षीरपायसं च।

श्लो, ९७. (P. 190)




यन्त्रमिदं स्वर्णपट्टे ताम्रपट्टे वा लिखित्वाऽष्ट दिनानि समाराध्य श्लोकमिमम-हरहःसहस्रमावर्त्य धारयेत् । साधको दृढकायो भवेत् । नैवेद्यं—शाल्यन्नं मधु च ।

श्लो, ९८. (P. 191)




इदं यन्त्रं कनकपट्टतले विलिख्य षोडशदिनान्यर्चयित्वा पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत् । अनेन स्त्रीणां गर्भधारणं पुरुषाणां बहुवृष्यता च भवेत् । नैवेद्यं—मधु ।

श्लो. ९९. (P. 193)




यन्त्रमिदं हेमपट्टे लिखित्वा षोडश दिनान्यभ्यर्च्य प्रत्यहं श्लोकमिमं सहस्र-मावर्त्य धारयेत्। अनेन साधकः शूरो भवेत्। नैवेद्य — त्रिमधुरं माषापूप मधु च।

श्लो. १००. (P. 201)




इदं यन्त्रं स्वर्णपट्टतले विलिख्य षोडश दिनान्याराध्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत्। अनेन सकलकार्यसिद्धिर्भवेत्। नैवेद्य — नारिकेलफलं कदलीफलं च।

शं भूयात्

॥ श्रीमहात्रिपुरसुन्दरीचरणारविन्दार्पणमस्तु ॥

---

(सूचना—

सौन्दर्यलहर्याः २०२ तमे पुटे व्याख्याटिप्पण्योः दत्तां सूचनामनुसृत्य लक्ष्मीधराचार्येण अव्याख्यातं पद्यत्रयं कैवल्याश्रमिकृतया सौभाग्यवर्धिनीव्याख्यया सह पाठकानां अवगाहनाय अत्र निर्दिश्यते—)

---

(श्लो. ९४.) (P. 186)

श्रीभगवत्या वदनप्रतिबिम्बमहिमानं प्रस्तौति—

**समानीतः पद्भ्यां मणिमुकुरतामम्बरमणि-**
**र्भयादास्यस्यान्तः स्तिमितकिरणश्रेणिमसृणः ।**
**दधाति त्वद्वक्त्रप्रतिफलनमश्रान्तविकचं**
**निरातङ्कं चन्द्रान्निजहृदयपङ्केरुहमिव ।।**

समानीत इति । मणिमुकुरतां पद्भ्यां, मणिमयादर्शरूपां लक्ष्मीं शोभां, समानीतः ; प्राप्तः अम्बरमणिः आस्यस्य भयात् अन्तःस्तिमितकिरणश्रेणिमसृणः, स्वकिरणसंपर्कात् जगदम्बिकावदनस्य ग्लानिर्भविष्यतीति भयात् अन्तः संकुचितकिरणश्रेणिभिः मसृणः चिक्कणः सन् , त्वद्वक्त्रप्रतिफलनं दधाति । किमिव ? अश्रान्तविकचम् ; अनवरतविकस्वरम् , चन्द्रान्निरातङ्कम् ; अम्लानं, निजहृदयपङ्केरुहमिव ; दर्पणीभूते दिनमणौ तव वदनं प्रतिबिम्बितम् , तस्य हृदयकमलायत इति भावः । समानीतः पद्भ्यामिति क्वचित्पाठः । तव चरणाभ्यां मुकुरतां समानीतः । तादर्थ्ये चतुर्थी । तव चरणार्थं मुकुरुतां प्राप्त इत्यर्थः । तव चरणप्रतिफलनयोग्योऽयं वदनप्रतिबिम्बधारणे का शक्तिरस्य ? तथापि तव चरणकरुणया वदनप्रतिबिम्बं दधानेति भावः ॥

(श्लो. ९८.) (P. 190)

अथ श्रीदेव्युपासनाया सारूप्यरूपकफलमाह—

**समुद्भूतस्थूलस्तनभरमुरश्चारुहसितं**
**कटाक्षे कंदर्पाः कतिचन कदम्बद्युतिवपुः ।**

**हरस्य त्वद्भ्रान्तिं मनसि जनयन्ति स्म विमला**
**भवत्या ये भक्ताः परिणतिरमीषामियमुमे ॥**

समुद्भूतेति । हे उमे ! भवत्या ये भक्ताः विमलाः मनोवाक्कायकर्मभिः भवच्चरणोपासनपराः दम्भादिदोषरहिताः एतेषां, इयं परिणतिः उपसनायाः परिणामः, सा का ? समुद्भूतस्थूलस्तनभरम् उरः चारुहसितं कटाक्षे कन्दर्पाः, कटाक्षविक्षेपेण बहव उज्जीविता भवन्तीति भावः । कदम्बद्युतिवपुः ; रोमाञ्च-कञ्चुकितं वपुः, महादेवावलोकनसमुद्भूतसात्विकभाव इति रहस्यम् । मनसि त्वद्भ्रान्तिं जनयति, एवंरूपा परिणतिर्भवति । त्वत्सारूप्यं प्राप्य तवैव संनिधौ सख्य इव वर्तमानाः त्वमिव महादेवस्य मनसि भान्ति । अनेना पूर्वोक्ताया भावनायाः फलमहिमा प्रतिपादितः । अत्र भ्रान्तिमानलङ्कारः ॥

(श्लो. १००.) (P. 193)

स्वकृतस्तुतिं निगमयति—

**निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे**
**निराघाटज्ञाने नियमपरचित्तैकनिलये ।**
**नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतपदे**
**निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् ॥**

निधे इति । निधीयते जगदस्यामिति निधिः, हे निधे ! जगदाधार-भूते ; तथाच मार्कण्डेये—"आधारभूता जगतस्त्वमेक" इति । नित्यस्मेरे ! सर्वदानन्दनिर्भरोन्मेषलसद्वदने । ननु जगदाधारभूता इति पूर्वं प्रतिपादितम् । अधुना नित्यस्मेरे इत्युच्यते । स्मेरता शरीरधर्मः जगदाधारभूता शक्तिरशरीरा । अत्र पूर्वोत्तरसंबोधनयोः परस्परं विरोध इत्यत आह—निरवधिगुण इति । निरवधिगुणे ! निरवधयः असंख्यातशक्तिविलासाः गुणाः यस्याः भक्तानुग्रह-शरीरायाः स्मेरता अचिन्त्यरूपाधारशक्तिरशरीरेति न विरोधः । यदि भक्तानु-

ग्रहाय शरीरपरिग्रहस्तर्हि भक्तेषु तारतम्यं कुतः ? कश्चिद्राजा, कश्चित्प्रभुः कश्चिद्दरिद्रः, कश्चिद्विरक्त इत्यत आह—नीतिनिपुणे इति । नीतिनिपुणे ! नीतौ निपुणा । यादृशो यस्यानुग्रह उचितः अनाद्यविद्यासंवलिततत्कर्मानुबद्धः तादृगनुग्रहः । तर्हि कर्मपारतन्त्र्यं भगवत्याः, न तु स्वातन्त्र्यमित्यस्मदादिवत्सा जातेत्यत्राह—निराघाटज्ञान इति । आघाटः इयत्तापरिमाणघटना, निराघाटः अखण्डः तादृशसंविदुल्लासरूपे । अस्याः सान्निध्यवशात् तत्तच्छक्तिसमवायेन तत्तत्कर्मानुग्रहो भवतीत्यर्थः । एतादृशी कथमुपास्या भवति? ध्यानादिभिराकलितुमयोग्यत्वादित्यत आह—नियमेति । नियमपरचित्तैकनिलये ! ये जपपूजाध्यानादिनियमैरुपासते, तेषां चित्तैकनिलये ! तेषां चित्ते आविर्भूय प्रकाशत इत्यर्थः । तर्हि भगवत्याः नियमपरचित्तैकनिलयं प्रकाशमानता नान्यत्रेति नियतिपरतन्त्रता जाता इत्यत आह—नियत्येति । नियत्या निर्मुक्ते ! लीलया नियमपरचित्ते प्रकाशते ननु नियतिपरतंन्त्रतया ! यथा कल्पद्रुमः सर्वसाधारणोऽपि सेवापराणां फलदाता, नान्येषां, यथा वा सूर्यः जलादौ निर्मले वस्तुनि प्रतिबिम्बते, नान्यत्र, तेन न सूर्यस्य नियतिपारतन्त्र्यं तथेति भावः । एतस्या देवतायाः सद्भावे किं प्रमाणमित्यत आह—निखिलेति । निखिलनिगमान्तस्तुतपदे ! निगमाः वेदान्ता उपनिषदः ताभिरुपलक्षितपदे ; उपनिषदः प्रमाणमित्यर्थः । केन प्रकारेण स्तुतपदा ? तमेव प्रकारमाह—निरातङ्के इति । निरातङ्के नित्ये ! तथा च श्रुतिः "अभयमक्षरममितमनण्वस्थूलमविकारं केवलं चिन्मात्रमयं ब्रह्म" इति । एवंप्रकारेण स्तुते इति । निगमय ममापि स्तुतिमिमां ; निगमय-निगमीकुरु । तत्करोतीत्यर्थे णिच् । वेदमिव सर्वसंप्रतिपन्नां कुरु । यथा वाल्मीकिव्यासादीनां वाचः स्मृतिपुराणेतिहासादयः निगमवत् सर्वसंप्रतिपन्नास्त्वया कृताः, तथा ममापीयं स्तुतिः निगमीक्रियतामित्यर्थः । तथाच कौर्मे भगवत्या वचनं हिमवन्तं प्रति,

वेदरूपा पराशक्तिर्मम लोके प्रवर्तते ।
तयाधिष्ठानि कर्माणि कुर्वन्ति सुरसत्तमाः ॥
देवर्षयो राजर्षयो व्यासादिमुनयस्तथा ।
तैः प्रणीतानि सर्वाणि कल्पसूत्रमुखानि वै ॥
धर्मशास्त्रपुराणानि सेतिहासस्मृतीनि च ।
ज्ञेयानि वेदवत्तानि नात्र कार्या विचारणा ॥

इति । अत्र बहुकारणेषु एकक्रियायोगात् मालादीपकालंकारः ॥

———

# अनुबन्धः २.

१. भावनोपनिषत्-सभाष्या
२. लघुस्तुतिः
३. चर्चास्तवः
४. घटस्तवः
५. अम्बास्तवः
६. सकलजननीस्तोत्रम्

॥ श्रियै नमः ॥

# भावनोपनिषत्

## भास्कररायविरचितभाष्यसहिता

---

श्रीनाथाङ्घ्रिपरागैकोपरागादपरागधीः ।
भावनोपनिषद्भाष्यं भाषते भास्करः सुधीः ॥

इह खलु श्रीत्रिपुरसुन्दर्याः स्थूलसूक्ष्मपररूपभेदेन त्रिविधायाः उपास्तिरूपाः क्रिया अपि त्रिविधाः कायिकी वाचिकी मानसी चेति। तासां बहिर्यागजपान्तर्यागरूपाणां एकैकस्यामितरयोः संवलितत्वेऽपि प्राधान्यप्राचुर्याभ्यां कायिकत्वादिव्यपदेशः। एतास्वादिमं द्वयं त्रिपुरतापिन्याद्युपनिषत्सूपदिश्य ततोऽपि रहस्यभूतां कालचक्रान्तर्गतश्रीचक्रस्य भावनानाम्नीं तृतीयामुपास्तिमथर्वनामा वेदपुरुषो योगिजनानुजिघृक्षया प्रकाशयन्नादौ सद्गुरोः पररूपत्वमभिधत्ते—'श्रीगुरुः सर्वकारणभूता शक्तिः' इत्यादिवाक्यद्वयेन। अत्र चोपनिषदन्ते श्रूयमाणं 'भावनापरो जीवन्मुक्तो भवति' इति वाक्यं यदाग्नेयादिवाक्यवत् भावनया जीवन्मुक्तिं भावयेदिति विपरिणतं सत् अपूर्वो विधिः। अर्थभावनाकरणीभूतायाश्च भावार्थरूपायाः पररूपभावनायाः स्वर्गवदलौकिकत्वेन* तत्स्वरूपनिरूपणार्थः 'श्रीगुरुः' इत्यादिः सर्वोऽपि तद्विधेः शेषः। तेन 'यन्न दुःखेन' इत्यादिवाक्यवत् विध्येकवाक्यतया स्वार्थे प्रामाण्यमस्यावसेयम्। ताश्च भावनाः यद्यपि कादिमतकौलमतभेदेन

---

* भावनायाः व्यूढावदतात्त्विकत्वेन-ख.

द्विलक्षणा*स्तन्त्रेषूपलभ्यन्ते, तथापि प्रकृतोपनिषदि कादिमतानुसारेणैव वर्ण्यन्ते। कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः, 'य एवं वेद' इत्युपसंहारात्। तेनास्यामेवोपनिषदि शाखाभेदेन पाठभेददर्शनेऽपि कादिमतीयतन्त्रसूत्राद्युपबृंहणानुगुणं पाठमनुसृत्येहास्माभिर्व्याख्यायते। अत एव प्रयोगविधिलेखनावसरे प्रकृतशाखायामश्रूयमाणोऽप्यंशोऽपेक्षितत्वान्नित्याहृदयतन्त्रराजबिन्दुसूत्रादिभ्य उपसंहृत्य वर्णयिष्यते ॥

**श्रीगुरुः सर्वकारणभूता शक्तिः ॥ १ ॥**

**तेन नवरन्ध्ररूपो देहः ॥ २ ॥**

इदं च वाक्यद्वयमुपबृंहितं तन्त्रराजे—

गुरुराद्या भवेच्छक्तिः सा विमर्शमयी मता।
नवत्वं तस्य देहस्य रन्ध्रत्वेनावभासते ॥ इति।

अत्र 'आद्या' इति 'सर्वकारणभूता' इत्यस्य विवरणं, कारणस्य कार्यपूर्वभावित्वेनाद्यत्वात्। ईश्वरानुग्रहवशेन जायमानो विवेक एव सर्वसंशयभेदनेन मन्त्रवीर्यप्रकाशनेन तात्त्विकपदार्थानामवकाशप्रदानाद्विमर्शपदाभिधेयो गुरुः। गुर्वभिन्नरन्ध्रवान्।

तदुक्तम्—**'गुरुरुपायः'** इति शिवसूत्रे वार्तिककृता—

गुरुरेव परा शक्तिरीश्वरानुग्रहात्मिका।
अवकाशप्रदानेन सैव यायादुपायताम्!
अकृत्रिमाहमामर्शस्वरूपाद्यन्तवेदनात्।
परमेष्ठिसमत्वेन परमोपायता गुरोः ॥ इति।

---

* मतभेदेन परस्परविलक्षणा-ख.

मालिनीतन्त्रेऽपि—

> स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः ।
> आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ।
> गुरोर्लक्षणमेतावदादिमान्त्यं निवेदयेत ॥ इति ।

तादृशविवेकाख्यवृत्त्यवच्छिन्नचिच्छक्तिस्तु प्राणशक्तिविहारावसाना सुषुम्नाख्या नाड्येव विमर्शमयीत्युच्यते । श्रीगुरोस्तावद्दिव्यसिद्धमानवभेदेन रूपत्रयम् । तत्रैकैकं पुनस्त्रिविधमिति प्रकाशानन्दनाथादिसुभगानन्दनाथान्तभेदेन नव-रूपता तन्त्रे प्रसिद्धा । तद्वासनामाह—तेनेति । षष्ठ्यर्थे तृतीया । तस्याः विमर्शशक्तेः देहः स्वरूपं नवरन्ध्रमयम् । श्रोत्रचक्षुर्नासानां द्वयं द्वयम् । जिह्वागुह्यपायवः एकैकमिति नवभी रन्ध्रैः स्वस्वविषयविमर्शः उपादेयोपदेशग्रहणमनुपादेयमोचनादिकं च भवतीत्यादिसाधर्म्यात्तानि विमर्श-रूपाण्येव । वस्तुतः 'धान्येन धनी' इतिवदभेदे तृतीया । तदभिन्नरन्ध्र-नवकवान् स्वदेह इत्यर्थः । तन्त्रराजेऽपि तस्येत्यस्य नवत्व एवान्वयः, न देहपदेनान्वयः । देहरन्ध्रनवत्वेन गुरोर्नवत्वं भासत इत्यर्थः । स्वदेहगत-नवरन्ध्राणि नव नाथा इति यावत् ।

तेषु श्रोत्रद्वयं वाक्च दिव्यौघः । दृग्द्वयमुपस्थश्च सिद्धौघः । इतरे मानवौघ इति सम्प्रदायः । एतद्विमर्शनवकस्य मूलभूता सुषुम्नानाड्येव, सरन्ध्रसुषुम्नामूलभागे श्रोत्रादिनाडीनां मिलितत्वेन सुषुम्नावच्छिन्नचिच्छक्तेरेव तत्तन्नाडीद्वारा तत्तद्विषयावभासकत्वात् । नाडीनामवस्थानप्रकारो यथा—

> प्रागुक्तमूलाधारस्य मध्यस्थत्र्यस्रमध्यतः ।
> सुषुम्नापृष्ठवंशाख्यवीणादण्डस्य मध्यगा ॥
> मूर्धनि ब्रह्मरन्ध्रान्ता नासाग्राद्द्वादशाङ्गुला ।
> तन्मूलात्पायुगा प्रोक्ताऽलम्बुसाख्या तु नाडिका ॥

त्र्यश्राग्रादुत्थिता नाडी कुहूर्नाम ध्वजान्तगा ।
तद्वामदक्षपार्श्वाभ्यां सविश्वोदरवारणे ॥
जठरान्ता सर्वगा च प्रोक्ते तद्वदनन्तरे ।
हस्तिजिह्वायशस्विन्यौ पादाङ्गुष्ठान्तविस्तृते ॥
तथैवेडापिङ्गले द्वे नासारन्ध्रद्वयान्तगे ।
गान्धारी च तथा पूषा नेत्रद्वयगते क्रमात् ॥
तथैव कर्णगामिन्यौ शङ्खिनी च पयस्विनी ।
जिह्वाग्रगा सरस्वत्याख्यैवं नाड्यश्चतुर्दश ॥

मूलाधारे नाडीनां स्थितिक्रमो यथा—

मूलाधारे त्र्यश्रमध्ये सुषुम्नालम्बुषे उभे ।
प्राक्प्रत्यगास्थिते अन्यास्त्रिकोणाग्रात्प्रदक्षिणाः ॥
लेखासु संस्थिता नाड्यः कुहूश्चैव तु वारणा ।
यशस्विनी पिङ्गला च पूषानाम्नी पयस्विनी ॥
सरस्वती शङ्खिनी च गान्धारी तदनन्तरम् ।
इडा च हस्तिजिह्वा च ततो विश्वोदराभिधा ॥
रन्ध्रपायुध्वजाशेषपन्नासानेत्रकर्णगाः ।
जिह्वाकर्णाक्षिनासाङ्घ्रिजठरान्ताश्चतुर्दश ॥ इति ।

तैस्तैश्चक्रकार्यभूतैस्तत्त्वैरयं विमर्शनचक्रसमष्टिं गुर्वभेदेन भावयेदिति सिध्यति । केचित्तु—श्रोत्राद्यवयवानां च तत्तन्नाडीनां च तत्तन्नाथाभेदभावनमिच्छन्ति ॥

**नवचक्ररूपं श्रीचक्रम् ॥ ३ ॥**

देह इत्यनुवर्तते । स्वकीयो देह एव त्रैलोक्यमोहनादिनवचक्र-समष्टिरूपश्रीचक्राभिन्नः । अवान्तरचक्रविभागस्तु आवरणदेवतास्थानैर्व्यक्ती-भविष्यति । तानि च स्थानानि शाखाभेदेनैव विवृतानि, रहस्यत्वात् । अत एव तन्त्रराजेऽप्यनुक्तानि, नित्याषोडशिकार्णवे विवृतत्वात् ! तदिदमुक्तं बिन्दुसूत्रे 'अपरशिवोदितव्याकुलस्थाननिर्णीतिचणदेशिकप्रसादाधिगतविभाव-नारहस्यमुपह्वरम्' इति । एकः शिवस्तन्त्रकर्ता प्रसिद्धः । अपरशिवो वेदपुरुषः तेनापि व्याकुलतया शाखाभेदेनोक्तानां स्थानानां, निर्णयनसमर्थस्य गुरोः प्रसादादधिगतं यदीयविभावनारहस्यं तादृशदेहरूपं श्रीचक्रं अपरोक्षानु-भवोपायेषु रहस्यं इत्युपह्वरमिति तदर्थः पद्मपादाचार्यैर्वर्णितः । 'अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः' इति भारतश्लोके शिवशब्दस्य वेदपरत्वेनैव प्रयोगात् अपरशिवैः शाखान्तरैरित्यर्थः सुवचः ॥

**वाराही पितृरूपा कुरुकुल्लाबलिदेवता माता ॥ ४ ॥**

**पुरुषार्थास्सागराः ॥ ५ ॥**

स्वदेहे ज्ञानेन्द्रियकर्मेन्द्रियबुद्ध्यादिषु संक्रान्ता ये जनकजनन्योरंश-विशेषाः अस्थ्यादिमांसादिरूपास्ते वाराहीत्वेन कुरुकुल्लात्वेन कामाद्भावनीयाः। वाराह्याः स्त्रीत्वेऽपि तन्मुखस्य पुंरूपत्वात्पितृरूपतोपपत्तिः । पश्चिमाद्युत्तरान्तदिक्षु विद्यमाना इक्ष्विराघृतक्षीरसागराः स्वीयधर्मादिपुरुषार्थचतुष्टयरूपाः । तन्त्रराजे-ऽप्युक्तम्—

बलिदेव्यः स्वमायाः स्युः पञ्चमी जनकात्मिका ।
कुरुकुल्ला भवेन्माता पुरुषार्थास्तु सागराः ॥ इति ।

अत्र प्रथमश्चरणः शाखान्तरमूलकः सर्ववेदान्तप्रत्ययन्यायेनोपास्यैक्येऽपि न तस्योपसंहारः, कुरुकुल्लाया एव बलिदेवतात्वविशेषणसामर्थ्यात् । अतस्मि-

स्तद्बुद्धिं जनयित्वा उन्मार्गप्रवर्तिकाः शक्तयः स्वमायापदेनोच्यन्त तु इति मनोरमाकारः ॥

**देहो नवरत्नद्वीपः ॥ ६ ॥**

**त्वगादिसप्तधातुरोमसंयुक्तः ॥ ७ ॥**

**सङ्कल्पाः कल्पतरवस्तेजः कल्पकोद्यानम् ॥ ८ ॥**

त्वगादिरित्यतद्गुणसंविज्ञानो बहुव्रीहिः, तेन त्वगेका रुधिराद्यस्थ्यन्ताः सप्त लोमानि चेति नवकं नवरत्नात्मकं खण्डनवकमिति सिध्यति । अत्रायं सम्प्रदायलभ्योऽर्थः—रसमांसरोमत्वग्रुधिरशुक्रमज्जास्थिमेदांसि पुष्यरागनीलवैडूर्यविद्रुममौक्तिकमरकतवज्रगोमेधपद्मरागात्मकनवरत्नमयखण्डरूपाणि प्रतीच्यादिनिरृत्यन्तदिक्षु [1]मध्येऽवस्थितानीति विभावयेदिति । 'सर्वशाखाप्रत्ययमेकं कर्म' 'सर्ववेदान्तप्रत्ययमेकमुपासनम्' इति पूर्वोत्तरमीमांसान्याभ्यां गुणोपसंहारस्यावश्यकतया कालचक्रेश्वर्यादिदेवतानवकाभेदोऽप्येतेष्वेव धातुषु शाखान्तरोक्तो विभावनीयः । तत्प्रकारः प्रयोगविधौ स्पष्टीकरिष्यते । मानसाः सङ्कल्पविशेषा एव सन्तानादिकल्पवृक्षाः, सङ्कल्पपुरस्सरं कर्मसु प्रवृत्त्याऽभिमतफलसिद्धेः । तेषामाधारभूतं तेजो मन एव कल्पकोद्यानम् । 'मनो ज्योतिः'* इति श्रुतिव्यवहारादिह सङ्कल्पविकल्पात्मकं मन एव तेजःपदेनोच्यते ॥

**रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्तवः ॥ ९ ॥**

---

[1] मध्ये च स्थि. * तै. सं. १-५-२.

मधुरादयो यदा रसनयानुभूयन्ते तदा तादृशानुभूयमानत्वविशिष्टेषु तेषु वसन्तादिऋत्वभेदभावनं, केवलानां तु तेषां स्वाभिन्नपदार्थान्तरनिष्ठत्वेन मनसः पराग्वृत्त्यापत्तेः, अस्या भावनायाः प्रत्यग्वृत्त्यभ्यासरूपत्वेन तदितरनिरोधायोगात् । अत एव रसनाभाव्यत्वविशेषणम् । तेन त्वगादिनिष्ठानां व्यावृत्तिरिपि फलति ॥ तन्त्रराजे तु—

रत्नद्वीपो भवेद्देहो नवत्वं तु त्वगादिभिः ।

सङ्कल्पाः कल्पतरवः स्वाधारा ऋतवः स्मृताः ॥

इत्युक्तम्। अत्र स्वाधारपदेन डाकिन्यादियोगिनीषट्चक्राधारभूतानि सुषुम्नान्तर्गतानि षट्चक्राण्युच्यन्ते । सुषुम्नाया इडापिङ्गलात्मकचन्द्रार्कसंयोगेनानुमितकलात्मकतया तद्गतानां चक्राणामृत्वात्मकत्वं युक्तमिति व्याचक्षते । वस्तुतः प्रत्यक्षश्रुत्यनुरोधात्स्वानुभूयमानरसपरत्वमेव स्वाधारपदस्य युक्तम् । ननु भाव्यमान इति शानचा वर्तमानकालकथनात् उपास्तिकाले अनुभूयमानरसाभाव इति चेत् , न, अनुभवानामेव संस्कारात्मना तदानीमपि सत्त्वात् , स्वमात्मा आधारस्समवायी येषामिति व्युत्पत्त्या स्वाधारपदस्य रसानुभवजन्यसंस्कारपरत्वस्यैव सुवचत्वात् , डाकिन्यादीनामितःपूर्वमनुपस्थिततया स्वपदेन तत्परामर्शायोगात् , वैद्यके ऋतुभेदेन रसव्यवस्थायाः कथनेन ऋतुरससंस्कारयोरभेदस्य युक्तत्वाच्च । एवंरीत्योपपत्तौ शाखान्तरमूलकत्वानुमितेरप्रसङ्गाच्च । इहाश्वगजानां परिखामण्टपयोश्च भावनोपसंहारः ॥

**ज्ञानमर्घ्यं ज्ञेयं हविः ज्ञाता होता ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम् ॥ १० ॥**

एतच्चोपबृंहितं तन्त्रराजे—

ज्ञाता स्वात्मा भवेद् ज्ञानमर्घ्यं ज्ञेयं हविः (बहिः) स्थितम् ।

श्रीचक्रपूजनं तेषामेकीकरणमीरितम् ॥ इति ।

ज्ञानशब्दो घटादिज्ञानपरः, अर्घ्यशब्दः पूजासामग्रीपरः, ज्ञेय(बहिः)शब्दो बाह्यविषयमात्रपरः । यावानिदंताविषयः स सर्वोऽपि हविष्ट्वेन श्रुतौ निर्दिष्टः ; नैवेद्यमिति यावत् । अत एवार्घ्यशब्दस्तदितरविशेषार्घ्यपरतया संकोच्यः । पूज्या देवता तु चिद्रूपा प्रसिद्धत्वान्नोक्ता । अहन्ताविषयो ज्ञाता पूजकः प्रकृतत्वाद्विशिष्य श्रुतावनुक्तोऽपि तन्त्रे निर्दिष्टः । स्वात्मचैतन्याद्भेदेन प्रतीयमानानां ज्ञातृज्ञानज्ञेयानां भेदकनामरूपाननुसन्धानपूर्वकं चिन्मात्ररूपतया विभावनमिह विधीयते । तन्त्रे भावे ल्युडन्तपूजनपदार्थस्तु त्रितयाभेदमात्रं, न त्वभेदविभावनम् । लोके हि विशेषार्घ्यजलबिन्द्वादेर्नैवेद्यस्य स्वात्मनश्च देवतायां समर्पणरूपसंबन्ध एव पूजा । तद्वत्प्रकृतेऽपि त्रयाणां चिता सह तादात्म्यस्यैव तथात्वमुचितम् । तदनुकूला कृतिर्हि विभावनमत्राभिधीयते । विभावनस्यैव पूजनपदार्थत्वे विभावनपूजनयोरभेदेन विभावनान्तरमापद्येत । तेन करणेल्युडन्तः श्रौतः पूजनशब्दः पूजानुकूलकृतिपर इति द्योतनायैकीकरणमित्युपबृंहितम् ॥

**नियतिः शृङ्गारादयो रसा अणिमादयः ।**
**कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमय्यो**
**ब्राह्म्याद्यष्टशक्तयः ॥ १९ ॥**

नियतिः प्रारब्धमेकम् । शृङ्गारादयो नव । आदिपदाद्भयानकरौद्रबीभत्सहास्यवीरकरुणाद्भुतशान्तपरिग्रहः । एतेषां दशानां क्रमेणाणिमादिसिद्धिदशकाभेदः । अत्र क्रमे मूलं बिन्दुसूत्रतो ज्ञेयं, शृङ्गारादीत्यादिपदेन गृहीतानां क्रमस्याज्ञातत्वेनान्यतो ग्रहणस्योचितत्वात् । कामाकर्षिण्यादिवक्ष्यमाणवासनानां तु पाठक्रमेण निर्णयसम्भवान्निधिकारोक्तव्युत्क्रमो यावन्मूलदर्शनं न विश्वासनीयः । अत्र मयट्प्रत्ययो ब्रह्ममयं जगदित्यादाविवाभेदार्थकः । यत्तु तन्त्रराजे—

श्रीचक्रे सिद्धयः प्रोक्ता रसा नियतिसंयुताः ।
ऊर्मयः पुण्यपापे च ब्राह्मयाद्या मातरः स्मृताः ॥

इत्युक्तम्, तत्राप्यूर्मिशब्दः कामाद्यरिषड्वर्गपर एव ; पुराणेषु कामादेरप्यूर्मिपदेन क्वचिद्व्यवहारदर्शनात् । तेन क्षुधापिपासाशोकमोहजरामरणपरत्वेन परेषां व्याख्यानं प्रत्यक्षश्रुतिविरोधादनादेयम् ॥

**आधारनवकं मुद्राशक्तयः ॥ १२ ॥**

**पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पादपाणिपायूपस्थानि मनोविकारः कामाकर्षिण्यादिषोडशशक्तयः ॥ १३ ॥**

मूलाधारादिषट्कमूर्ध्वाधः सहस्रदलकमले द्वे लम्बिकाग्रमेकमिति नवाधाराः । तेषामेव समष्टिरेकेति दश । एतैः संक्षोभिण्यादित्रिखण्डान्तमुद्राभिमानिशक्तिदशकस्याभेदाः । तन्त्रान्तरेषु तृतीयरेखादेवताभावात्तदनुयायिबिन्दुसूत्रोक्तानां आवरणदेवतास्थानानामिह (न) ग्रहणम् । अन्ये तु योगिनीहृदयस्यापि कादिमतानुयायित्वात्तत्र मुद्रादेवतानां शरीरावयवेषु अवस्थानकथनात्तान्येव स्थानानि ग्राह्याणि । एतदुपनिषदुक्तदेवताविभावनस्य पूजान्यासोभयरूपतायाः निधिकारादिसाम्प्रदायिकसम्मतत्वात् । तेन कतिपये न्यासधर्मास्तन्त्रोक्ता इह योजनीया इत्याहुः । तेच 'चतुरश्राद्यरेखायै सम इत्यादितो न्यसेत्' इत्यादयः प्रयोगविधौ उपसंहरिष्यन्ते । प्रत्यावरणमेकैकस्याः सिद्धेर्मुद्रायाश्च विभावनमग्रे विधास्यते । तत्तच्चक्रेश्वरीविभावनमप्यन्यत्रोक्तमुपसंहार्यम्। पञ्च भूतानि एकादशेन्द्रियाणि च सर्वाशापरिपूरकचक्रस्थदेवताभिन्नाः। अत्र विकारशब्दः षोडशसङ्ख्यापरः । मनोविकार इत्येकं पदं वा—विकृतं मन इत्यर्थः ; 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति व्युत्पत्तेः । तेन मन इक्षुधनुः' इत्यनेन न पौनरुक्त्यम् ॥

**वचनादानगमनविसर्गानन्दहानोपादानोपेक्षा-**

**ख्यबुद्धयोऽनङ्गकुसुमाद्यष्टौ ॥ १४ ॥**

कर्मेन्द्रियाणां वचनादयो विषयाः पञ्च । हानं त्यागः । उपादानं ग्रहणम् । उपेक्षा औदासीन्यम् । ईदृशबुद्धित्रयं चेत्यष्टौ । इदमेव बुद्धित्रयं दोषपदेनोक्तं तन्त्रराजे—

भूतेन्द्रियमनांस्येव क्रमान्नित्याः कलाः पुनः ।

कर्मेन्द्रियार्थदोषश्च ज्ञेयाः स्युः शक्तयोऽष्टधा ॥

इति । वातपित्थकफा दोषा इत्यन्ये ।

**अलम्बुसा कुहूर्विश्वोदरा वारणा हस्तिजिह्वा यशोवती पयस्विनी गान्धारी पूषा शङ्खिनी सरस्वती इडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दश शक्तयः ॥ १५ ॥**

नाथनवकव्याख्यानावसरे नाडीनां स्वरूपं प्राग्विवृतं, तदभिन्ना मन्वश्रदेवताः । एतासां नाडीनां पूर्वोक्तपृथिव्यादिषोडशकस्य च व्युत्क्रमो भूयानेव निधिग्रन्थे दृश्यते । श्रौतक्रमबोधकप्रत्यक्षश्रुतिमन्तरेणाऽत्रत्यपाठक्रमबाधस्यायोगात्तत्र मूलं चिन्त्यम् ॥

**प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयाः दश वायवस्सर्वसिद्धिप्रदादिबहिर्दशारदेवताः ॥ १६ ॥**

एतद्वायुसंसर्गकोपाधिभेदेन रेचकः पाचकः शोषको दाहकः प्लावकः इति प्राणमुख्यत्वेन पञ्चधा जठराग्निर्भवति ।। १७ ।।

क्षारक उद्गारकः क्षोभको जृम्भको मोहक इति नागप्राधान्येन पञ्चविधास्ते मनुष्याणां देहगाः भक्ष्यभोज्यचोष्यलेह्यपेयात्मकं पञ्चविध मन्नं पाचयन्ति ।। १८ ।।

एता दश वह्निकलाः सर्वज्ञाद्या अन्तर्दशारगा देवताः ।। १९ ।।

प्राणाद्याः पञ्च महावायवः नागाद्याः उपवायवः प्रश्चेत्येवं दशापि सर्वार्थसाधकचक्रस्थदेवताभिरभिन्नाः । तन्त्रराजेऽपि—

नाड्यश्चतुर्दश प्रोक्ताः क्षोभिण्याद्यास्तु शक्तयः ।
वायवो दश संप्रोक्ताः सर्वसिद्ध्यादिशक्तयः ।। इति ।।

एकस्यैवौदर्याग्नेः प्राणादिदशवायुसंबन्धेनौपाधिकत्वं वाक्यद्वयेन विवृतम् । तृतीयवाक्येन पाचकस्य कार्यम् । चतुर्थवाक्येन सर्वार्थसाधकचक्रस्थदेवताभिरभेदः उक्तः । धातुसप्तके दोषत्रये च विद्यमानत्वाद्दशधात्वमग्नेरन्ये मन्यन्ते । तन्त्रराजे तु—

वह्नयो दश संप्रोक्ताः सर्वज्ञाद्याश्च शक्तयः ॥

इत्यत्र 'सम्प्रोक्ताः' इत्यस्य श्रुतौ कथिता रेचकादय इत्येवार्थः । केचित्प्रोक्तपदं वक्ष्यमाणार्थकं मन्यन्ते । तस्मिन्नेव पटले—

अग्निर्वह्निः शुचिस्तेजः प्रभा दावः शिखी द्युतिः ।
दाहो ग्रासः ............ ॥

इति नामदशकस्योत्तरत्र कथनात् । परन्तु प्रयोगे मन्त्रघटकता श्रौतनाम्नामेवोचिता, *"विधिशब्दस्य मन्त्रत्वे" इति दाशमिकाधिकरणन्यायात् ॥

**शीतोष्णसुखदुःखेच्छाः सत्त्वरजस्तमोगुणाः वशिन्यादिशक्तयोऽष्टौ ॥ २० ॥**

शीतोष्णे सुखदुःखे चेति द्वन्द्वद्वयम् , इच्छैका, सत्त्वादित्रयमित्यष्टौ वाग्देवताष्टकरूपाः । तन्त्रराजेऽपि—

शीतोष्णसुखदुःखेच्छागुणाः प्रोक्ताः क्रमेण वै ।
वशिन्याद्याः शक्तयस्स्युः .... ॥ इति ॥

**शब्दादितन्मात्राः पञ्चपुष्पबाणाः ॥ २१ ॥**

**मन इक्षुधनुः ॥ २२ ॥**

**रागः पाशः ॥ २३ ॥**

**द्वेषोऽङ्कुशः ॥ २४ ॥**

शब्दस्पर्शरूपरसगन्धास्तन्मात्रपदेनोच्यन्ते । ते च मुखे अभिमुखाः, अन्ते परुषाः, अत एव बाणाभिन्नाः । अविकृतं तु मनः पुण्ड्रेक्षुचापरूपम् , विषयपरामर्शरूपाणामिन्द्रियाणां प्रेरकत्वात् । रागः प्रीतिः षट्त्रिंशदन्तर्गता

---

* जैमिनिसू. १०-४-२२

तत्त्वविशेषः न त्विच्छासामान्यम् । तेनारुणावाग्देवतावसानया न पौनरुक्त्यम् । बन्धकत्वेन साम्यात्तस्य पाशाभेदः । द्वेषः क्रोधः ; तस्य द्वेष्यान्निवारकत्वादङ्कुशता । उक्तं च रहस्यनामसाहस्रे—

रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ।
मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका ॥ इति ॥

तन्त्रराजेऽपि—

.... .... तन्मात्राः पुष्पसायकाः ॥
मनो भवेदिक्षुधनुः पाशो राग उदीरितः ।
द्वेषः स्यादङ्कुशः प्रोक्तः क्रमेण वरवर्णिनि ॥ इति ॥

**अव्यक्तमहदहङ्काराः कामेश्वरीवज्रेश्वरीभग-**
**मालिन्योऽन्तस्त्रिकोणगा देवताः ॥ २५ ॥**

अत्र महदव्यक्तशब्दौ बुद्धिप्रकृतितत्त्वपरौ । अव्यक्तादिपदत्रये समाहारद्वन्द्वः । परं तु न यथासङ्ख्यं त्रितययोरभेदः ; अपि तु 'अव्यक्ताहङ्कृतिमहदाकाराः प्रतिलोमतः कामेश्वर्यादिदेव्यः स्युः' इति तन्त्रोपबृंहणानुरोधेन व्युत्क्रमेण वासनाः ॥

अत्र मुख्यविशेष्या ललिता । विशेष्यतावच्छेदकः कामेश्वरः । अनयोश्च रक्तचरणशुक्लचरणरूपते रक्तवशुक्लवर्णौ, अनयोरेव संबन्धविशेषः । तस्यैव स्थूलसूक्ष्ममिश्रचरणत्वं चेति त्रिविधं रूपम् । प्रकारत्वेन विषय उपासकः । तस्य मुख्यविशेष्येण सह संबन्धः प्रकारतावच्छेदकश्चेत्येकादश पदार्थान् त्रिभिर्वाक्यैर्विवेचयति निरुपाधिकेत्यादिभिः—

**निरुपाधिका संविदेव कामेश्वरः ॥ २६ ॥**

उपाधिरहितं शुद्धं चैतन्यमेव बिन्दुरूपः कामेश्वरः ; 'संवित्कामेश्वरः स्मृतः' इत्युपबृंहणात् ॥

**सदानन्दपूर्णा स्वात्मैव परदेवता ललिता ॥ २७ ॥**

संविदो निरुपाधिकत्वविशेषणबलात्तदङ्कनिलयायाः परदेवतायाः किञ्चिदुपाधिविशिष्टत्वमात्रेण ततो भिन्नतयोपास्यत्वम् । तादृशश्च स्वात्मैव । स्वाभिन्न एव परदेवता उपास्तिज्ञरूपानविशेषनिरूपितमुख्यविशेष्यताशालिनी तामेवासाधारणनाम्ना निर्दिशति ललितेति । अत्र सदानन्दपूर्णेत्युपाधिकथनम् । तेनान्तःकरणावच्छिन्नस्य न ललितात्वं, तस्योपासककोटौ प्रवेशात् । अत एव स्वात्मेत्युक्तं स्वस्योपासकस्यात्माऽन्तर्यामीति तदर्थत्वात् । इत्थं च एक एवात्माऽन्तःकरणोपाधिकस्सन्नुपासको भवति । सत्त्वचित्त्वानन्दत्वरूपधर्मत्रयविशिष्टवेषेण ललिता भवत्युपास्या । धर्मत्रयविनिर्मुक्तं धर्मिमात्रमुपास्यदेवताधारभूतः कामेश्वरो भवतीति विवेकः । तदुक्तं रत्नत्रयपरीक्षायाम्—

नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं
धर्मो धर्मीति भेदस्त्रितयमिति पृथग्भूय मायावशेन ।
धर्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्यानुकूला
शक्तिः स्वेच्छादिरूपा भवति गुणगणस्याश्रयस्त्वेक एव ॥
कर्तृत्वं तत्र धर्मी कलयति जगतां पञ्चसृष्ट्यादिकृत्ये
धर्मः पुंरूपमाप्त्वा सकलजगदुपादानभावं बिभर्ति ।
स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्तुः
प्रोक्तौ धर्मप्रभेदावपि निगमविदां धर्मिवद्ब्रह्मकोटी ॥ इति ॥

**लौहित्यमेतस्य सर्वस्य विमर्शः ॥ २८ ॥**

सर्वपदेन कामेश्वरो ललिता स्वयं चेति त्रितयम् । एतस्य विमर्शो नुसन्धानमेव देवीनिष्ठं लौहित्यं, सर्वस्य स्वात्मन्यनुरागात् रागलौहित्ययोरभेदात् । उक्तं च तन्त्रराजे—

स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा ।
लौहित्यं तद्विमर्शः स्यादुपास्तिरिति भावना ॥ इति ॥

अत्रेदं गुरुमुखैकवेद्यं रहस्यम्—निरुपाधिकपदेन केवलत्वस्य सदानन्दपूर्णपदेन धर्मविशिष्टत्वस्य च कथनेन विशिष्टकेवलयोरवयवावयविनोरिवायुतसिद्धयोस्तादात्म्यरूप एव सम्बन्धः न संयोगादिरूपो भेदघटितः । स च त्रिपुरसुन्दरीकामेश्वरयोर्विग्रहात्मकस्थूलरूपद्वयसम्बधः कामेश्वराङ्कनिलयत्वपदेन व्यवह्रियमाणशिवशक्तिसामरस्यात्मको लाक्षाद्रवपटयोरिव संयोगविशेष एवेति वासना । एवमुपाधिविनिर्मुक्तस्यैव शुद्धत्वेन स्फटिके वर्णान्तरोपरागाभावदशायमेव अविज्यमानत्वस्य शुक्लत्वस्य शुद्धस्फटिकाभेद एव पर्यवसितत्वेन कामेश्वरे शुक्लचरणत्ववासना । अनुसन्धानस्याहमात्मकमानसवृत्तिविशेषमात्ररूपत्वेन तद्विषयतायाः, विषयतासम्बन्धेन वृत्तेर्वा वृत्तिसम्बन्धेन मनस एव वा रागाभेदेन पर्यवसानात्तद्विशिष्टायां रक्तचरणत्ववासना । सर्वस्येत्यनेन विषयताया विशेष्यविशेषणतत्सम्बन्धेषु व्याप्तिकथनाच्चरणप्रभयोस्समरसभावसम्बन्धरूपमिश्रचरणस्यापि वासना सूचिता भवतीति दिक् । तन्त्रश्लोके 'गुरुराद्या भवेच्छक्तिः' इत्यादिनोक्तानां वासनानामनुसन्धानमुपास्तिपदवाच्यमिति कथनार्थश्चतुर्थचरणः । अथ वा—उपास्तेरपि त्रीणि रूपाणि ; विग्रहादिपूजनं स्थूलरूपं, मानसो जपस्सूक्ष्मं, एषा भावना परं रूपमिति ।

**अनन्यचित्तत्वेन च सिद्धिः ॥ २९ ॥**

प्रत्यावरणमेकैका सिद्धिरेकैका मुद्रा च बहिर्यागे पूज्यते । तद्वासनाविधानार्थमियं श्रुतिः ॥

अनन्यचित्तत्वेनेत्यभेदे तृतीया। चकारो मुद्रासङ्ग्रहार्थः। तथा चोपबृंहितं तन्त्रराजे–

सिद्धिस्त्वनन्यचित्तत्वं मुद्रा वैभवभावनम्। इति॥

तत्तदावरणदेवानां स्वशरीरावयवविशेषाभेदेन भावितानामपि स्वात्मानन्यत्वेन चित्ते भावनमेव तत्तदावरणस्था सिद्धिः। 'एता मत्तो न भिद्यन्ते' इति बुद्धिरेव सिद्धिरिति यावत्। सिद्धिपदमुपास्तिफलसिद्धिपरमिति केचित्। तत्पक्षे अव्यवहितपूर्वोक्तभावनायां विषयतावैलक्षण्यप्रयुक्तदभेदस्य अनिरासेनोपासना फलतीत्यर्थः। वस्तुतो वक्ष्यमाणतर्पणे विषयवैलक्षण्यनिरासादयं ग्रन्थस्सिद्ध्यादिपर एव। तासामेव वैभवं विभुत्वमपरिच्छिन्नता। तद्भावनमेव तत्तदावरणस्थमुद्राभावनमित्यर्थः।

**भावनायाः क्रिया उपचाराः॥ ३०॥**

उक्तायाः स्वात्माभेदेन ललिताभावनायाः क्रियाः पुनःपुनःकरणानि धारावाहिन्यो भावना इति यावत्। उपचारसमर्पणस्य भेदघटितत्वेन यथास्थितगन्धादिभावनापक्षे पूर्वविभावितस्य भेदस्य प्रमोषापत्तेस्तदविरोधिनीरेवोपचारभावनाः स्वेच्छया कल्पयेदिति भावः। तदुक्तं तन्त्रराजे—

उपचारश्चलत्वेऽपि तन्मयत्वाप्रमत्तता॥ इति॥

चलत्वं चाञ्चल्यं अभेदभावनास्थैर्याभावः, तादृशस्वभावशीलत्वेऽपि ब्रह्ममयत्वांशे प्रमादाभावोऽतीव सावधानता यथा स्यात्तथा विभावना एवोपचार इति तदर्थः। यद्यपि चलशब्दोऽवश्यंभाविप्रमादस्वप्नाद्यवस्थापरत्वेन मनोरमायां व्याख्यातः, तथाप्यपिशब्दस्वारस्येन जाग्रत्काले सावधानतामात्रावश्यकतापरैव सोक्तिरिति मन्तव्यम्। तादृशोऽप्रमादश्च योगवासिष्ठोक्तशिवपूजायां द्रष्टव्यः। आत्मनो विषयोपभोगजनितानन्दस्य सर्वस्य स्वात्माभेदेनानुसन्धानं

प्रारब्धलब्धसुखदुःखस्यापि कर्मक्षयकारकत्वेन परिणामसुखावहत्वात्कटुकषाय-वस्तुकृतस्वाङ्गोद्वर्तनादेरिव भावनया सपर्यारूपतैवेति तत्रत्यो निष्कर्षः। 'सपर्यापर्यायस्तव भवतु यन्मे विलसितम्' *इत्यादयो भगवत्पादादीनामुक्तयोऽप्यमुवार्थं वदन्ति। परन्त्वीदृशपूजाया अहोरात्रकालसाध्यत्वेन प्रकृते विधित्सितायाश्च भावनाया उत्तरत्र मुहूर्तादिकालनियमविधिना विरोधादन्यथैवोपचाराः कल्पनीयाः। तत्प्रकारो यथा—स्वे महिम्नि प्रतिष्ठितिविभावनमासनम्। 'पादोऽस्य विश्वा भूतानि'† इति श्रुत्या वादरूपे वियदादिप्रपञ्चे अस्तिभातिप्रियांशमात्रभावनारूपाभिरद्भिर्नामरूपमलक्षालनं पाद्यम्। तस्यैव सूक्ष्मप्रपञ्चस्य एकदेशत्वाविशेषाध्यस्तत्वेनापि परिकल्पनया उक्तरीत्या मलनिरासोऽर्घ्यम्। भावनारूपजलस्यापि कबलीकार आचमनम्। सत्त्वचित्त्वानन्दत्वाद्यखिलावयवाभेदेन भावनाजलसम्पर्कः स्नानम्। तेष्वेवावयवेषूक्तजलसम्पर्केण प्रसक्ताया वृत्तिविषयतायाः प्रच्छन्नभावनं वस्त्रम्। निर्विषयत्वनिरञ्जनत्वाद्यनेकब्रह्मलिङ्गभूततदभिन्नधर्मविभावनमाभरणम्। स्वशरीरान्तर्गतपार्थिवनाभसवायवीयतैजसभागानां चन्द्रमण्डलस्थामृतस्य तन्मण्डलस्य च जडभागापनयनपूर्वकं सच्चिदानन्दमात्रावशेषेण ब्रह्ममयत्वविभावनानि गन्धादिताम्बूलान्ताष्षडुपचाराः। उक्तं नित्याहृदये—

> भवतीं त्वन्मयैरेव नैवेद्यादिभिरर्चयेत्। इति।
>
> पञ्चभूतमयं विश्वं तन्मयी सा सनातनी ॥ इति च।

प्रकृतभावनाङ्गमन्त्रे परापश्यन्तीत्यादिनिखिलशब्दानां स्वीयानां नादद्वारा ब्रह्मण्युपसंहारवविभावना स्तोत्रम्। चित्तवृत्तीनां विषयेष्वितस्ततो धावमानानां विषयगतजडतानिरासपूर्वकं ब्रह्मणि विलापनं प्रदक्षिणम्। विषयेभ्यः परावर्तनेन वृत्तीनां ब्रह्मैकप्रवणता नमस्कार इति। यद्यपि 'बाह्यान्तःकरणानां एकरूप-

* सौन्दर्यलहरी. † तै. आ. ३-१२

स्थितिरासनं' इत्यादीनि वाक्यानि मूलेऽपि क्वचिद्दृश्यन्ते । तथापि तेषु कतिपयानामुपचाराणां प्रकृतभावनानुगुण्याभावाद्बहुषु पुस्तकेष्वनुलम्भात्तन्त्रेषु तदुपबृंहणादर्शनाच्च तान्यस्माभिरिह नादृतानि ॥

**अहं त्वमस्ति नास्ति कर्तव्यमकर्तव्यमुपा-
सितव्यमिति विकल्पानामात्मनि विलापनं होमः ॥ ३१ ॥**

सन्ति श्रीचक्रे पूर्वभावितेभ्यो अन्या अप्यनन्ताश्शक्तयः—

अन्यास्तु शक्तयश्चक्रगामिन्यो यास्समन्ततः ।
तास्तु विश्वविकल्पानां हेतवः समुदीरिताः ॥

इत्यादिना तन्त्रे वर्णिताः । तासां त्रिपुरसुन्दर्यभेदभावनाफलिकां होमवासनामाह—अहमित्यादिना । तेन नैवेद्याङ्गहोमस्य उपचाराद्बहिः पार्थक्येन कथनस्य नासाङ्गत्यम् । तथा च विसर्जनात्मकोपचारपराण्येव 'अहम्' इत्यारभ्य त्रीणि वाक्यानीति पर्यवसन्नम् । युष्मदस्मत्प्रत्यययोरहं त्वमित्यनेन ग्रहणम् । 'अस्ति नास्ति' इत्यनेन लौकिकयोर्विधिनिषेधयोः, 'कर्तव्यमकर्तव्यं' इत्यनेन वैदिकयोः कर्मकाण्डस्थयोः, 'उपासितव्यम्' इत्यनेन वेदशिरस्थविधेर्ग्रहणम् । 'नोपासीत' इति निषेधस्योपनिषत्स्वदर्शनादेव तदनुल्लेखः । एतत्सप्तकेन वृत्तिसामग्र्युपलक्ष्यते । ईदृशविकल्पानामप्यात्मस्वरूपत्वमात्माविशेषविभावनमेव होमभावना ॥

होमो विश्वविकल्पानां स्वात्मन्यस्तमयो दृढम् ।

इत्युपबृंहणात् । विकल्पानां निर्व्युत्थानविलापनपूर्वकं तद्धेतुशक्तिकदम्बस्य देवतायां विलीनतां भावयेदिति फलितार्थः ॥

**भावना विषयाणामभेदभावना तर्पणम् ॥ ३२ ॥**

श्रीगुर्वादिविशेषहोमान्ता यावन्तः पदार्था इह भाविता ये च भावयिष्यन्ते तेषां सर्वेषामपि परस्पराभेदभावनेन विषयतावैलक्षण्यप्रयुक्तभेदभावनस्यापि

निगरणेन निर्विकल्पतुरीयाखण्डविषयतामापाद्य तस्या अपि त्यागेन स्वात्म-मात्रावशेषः तर्पणवासना । यद्यपि—

ताम्बूलमर्चना स्तोत्रं तर्पणं च नमस्क्रिया ।

इति परिगणितमुपचारान्तरमेव तर्पणं, तथापि तदिहावरणदेवोपचाररूप-त्वाद्विसर्जनैकदेश एव स्वेतरभावननिरोधकत्वात्तर्पणतापि ।

एषामन्योन्यसंभेदभावनं तर्पणं स्मृतम् ।

इति तन्त्रराजे एषामित्यस्य न्यासजपहोमानामिति संकुचितं निधिकृतो व्याख्यानं श्रुतिविरोधादनादेयम् ॥

एतावता प्रबन्धेन देहरूपश्रीचक्रस्य स्वात्ममात्रावशेषतामुक्त्वा तेन सह बहिरङ्गसम्बन्धशालिनः प्रपञ्चस्यापि स्वात्मनि विलापनमाह—

**पञ्चदशतिथिरूपेण कालस्य परिणामावलो-**

**कनं पञ्चदश नित्याः ॥ ३३ ॥**

स च प्रपञ्चस्त्रिविधः—कालरूपो देशरूप उभयरूपश्चेति । तत्राद्यो यथा—चन्द्रमण्डलनिष्ठसादाख्यकलातिरिक्तः 'दर्शा दृष्टा दर्शता'* इत्यादि-श्रुतिपरिगणिताः पञ्चदश कलास्सन्ति तावत् प्रतिपदादिपूर्णिमान्ततिथिरूपास्ता एव च कामेश्वर्यादिचित्रान्तनित्याभिरभिन्नाः । सादैव तु ललिता । ईदृशस्य च नित्यं परिवर्तमानस्य कालरूपतिथिचक्रस्यान्तरेव श्रीचक्रं तिष्ठति, न बहिः । द्वितीयो यथा—भूगोलस्योत्तरभागे स्थितो मेरुः तद्दक्षिणतो जम्बूप्लक्ष-शाल्मासिकुशक्रौञ्चशाकपुष्कराख्यास्सप्त द्वीपाः । तेषामन्तरालेषु भूगोलस्य वलयाकारलवणेक्षुसुरासर्पिर्मधुक्षीराख्याः षट् समुद्राः, पुष्कराद्ब-हिर्मधुरोदस्समुद्रस्सप्तमः । ततोऽपि दक्षिणतः परं व्योमेत्येवं षोडश देवताः ।

---

[1] पसंहार. * तै ब्रा. ३-१०-१.

तेषु मेर्वादिव्योमान्तेषु क्रमेण ललितादिचित्रान्ताः नित्याः युगप्रथमवर्षे तिष्ठन्ति। द्वितीये तु वर्षे जम्बूद्वीपादिमेर्वन्तेषु च गच्छन्ति। तृतीये तु लवणसागरादि-जम्बूद्वीपान्तेष्वित्यादिरीत्या षोडशवर्षे परव्योमादिमधुरसमुद्रान्तदेशेषु ललिताद्याष्षोडश नित्यास्तिष्ठन्ति। एवं षोडशभिष्षोडशभिर्वर्षैर्नित्यानामेकैका परिवृत्तिः। ईदृशदेशरूपशक्रस्याप्यन्तरेव श्रीचक्रं न बहिः। तृतीयो यथा—भूगोलस्योपर्यधश्च वलयिताश्चन्द्रबुधशुक्ररविभौमगुरुशनिनक्षत्रकक्षा अष्टौ तत्तदन्तरालान्यष्टौ इति षोडश देशाः कालचक्ररूपास्सन्ति। तेषु स्थानेषु देशपरिवृत्तिविपरीतक्रमतष्षोडश नित्याः परिवर्तन्ते। अस्यापि चक्रस्यान्तरेव श्रीचक्रं न बहिः। अस्य त्रिविधस्यापि चक्रस्य पारमार्थिकरूपं नित्याचक्रमेव। ब्रह्मातिरिक्तस्य सर्वस्य देशकालावच्छिन्नतदभेदात्सर्वोऽपि प्रपञ्चो नित्यारूप एव। तासां स्वात्माभेदभावनैव ह्यत्र विधीयते—

अथ षोडशनित्यानां स्वात्मत्वे वासनां शृणु !<br>
यया तन्मयतासिद्धिः प्रत्यक्षा भवति ध्रुवम्॥

इत्युपक्रम्य 'गुरुराद्या भवेच्छक्तिः' इत्यादिना ललितायाः सङ्गोपाङ्गायाः स्वात्मत्ववासनामुक्त्वा, अन्ते—

तिथिरूपेण कालस्य परिणामावलोकनम्।<br>
नित्याः पञ्चदशान्यास्स्युः इति प्रोक्तास्तु वासनाः॥

इत्युपसंहारस्य तन्त्रराजे दर्शनात्। स च प्रपञ्चोपसंहारफलिकैव तिथिरूपेणेति त्रिविधचक्रोपलक्षणद्वारा प्रपञ्चपरम्। प्रपञ्चात्मकतया काल एव परिणतोऽस्तीति विभावनमेवान्यासां पञ्चदशनित्यानां विभावनमित्यर्थः। तासां त्रिपुरसुन्दर्यभेदस्य क्लृप्तत्वात्तदनुक्तिः भावनाविषयपदेनोक्तानां वक्ष्यमाणानां क्रोडीकारेण पूर्ववाक्य एवाभेदभावनाया विहितत्वाद्वा। वस्तुतस्तु सर्वा अपि तिथयः षट्छताधिकैकविंशतिसहस्रसङ्ख्याश्वासात्मककालरूपाः। तत्समष्टिविग्रहवती ललिता। अन्याः पञ्चदश व्यष्टिविशेषेण प्रत्येकं

चत्वारिंशदधिकचतुर्दशशतश्वासरूपा भवन्ति । तास्तथा विभावयेदित्यर्थः । एतत्पक्षद्वयभावना आवरणपूजातः कार्येति केचित् । बाह्यपूजायां तत्रैव स्थानक्लृप्तेः सर्वविलापोत्तरं भावनान्तरानवकाशादिति तदाशयः । वस्तुतस्तु स्वात्ममात्रपरत्वेन मनसस्स्तम्भे सति श्वासस्तम्भस्यावश्यंभावाद्देवताया रश्मिविलापनस्य विसर्जनकाल एवोचितत्वान्मनःपवनोभयस्तम्भस्यैवोत्तरत्र कालविधानायेहैवावसरसद्भावान्निरर्थकवाक्यापकर्षस्यायुक्तत्वाच्चेहैव नित्या भावना युक्तेति द्रष्टव्यम् ॥

एवमान्तरबाह्यनिखिलप्रपञ्चविलापनपूर्वकस्वात्ममात्रावशेषभावनायाः अहर्निशं धारावाहिकतावश्यकतां ध्वनयन् तदशक्तेषूत्तममध्यमाधमसाधकभेदेन त्रिविधं कालनियममाह—

**एवं मुहूर्तत्रितयं मुहूर्तद्वितयं मुहूर्तमात्रं वा**
**भावनापरो जीवन्मुक्तो भवति स एव शिव-**
**योगीति गद्यते ॥ ३४ ॥**

एवमित्यनेन अव्यवहितपूर्वोक्ता स्वात्ममात्रविषयिणी श्वासस्तम्भसहिता निर्विकल्पकवृत्तिरुच्यते । तदवभिन्नभावनायां परः तत्रैवासक्तः भावनेतरव्यापारशून्यः धारावाहिकभावनावानिति यावत् । स जीवन्मुक्तिरूपफलभाक् अचिरादेव जायते । जैगीषव्यादयश्शिवयोगित्वेन ये व्यवह्रियन्ते तेऽप्येतादृशभावनाशलित्वादेवेति तत्पदप्रवृत्तिनिमित्तमीदृशभावनेत्यर्थः ॥

**कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः ॥ ३५ ॥**

**य एवं वेद सोऽथर्वशिरोऽधीते ॥ ३६ ॥**

वेदत्रयं बहिरङ्गकर्मप्रतिपादकम् । अथर्वणवेदस्तु अन्तरङ्गकर्माण्येव प्रचुरं प्रतिपादयति । तस्यापि शिरोरूपेयमुपनिषत्तु ततोऽप्यन्तरङ्गतमां भावनां वक्ति॥

अस्यां या अन्तश्चक्रभावनाः कथितास्ताः कादिनामकशक्तिमतरीत्यैव, न तु कौलमतेन। अस्या उपनिषद ईदृशभावनाप्रतिपादकत्वमिति पदशो वाक्यशश्च यो वेद स एवाथर्वशिरोध्ययनवान् ; न तु शब्दमात्राध्ययनवान्। अध्ययनकरणकभावनाया अर्थावबोधभाव्यकत्वादिति भावः। 'योऽर्थज्ञ इत्सकलं भद्रमश्नुते' इति श्रुत्यन्तरे सकलपदस्वारस्यात् शब्दमात्रपाठादपि किञ्चिद्भद्रमस्त्येवेति च लभ्यत इति शिवम् ॥

इति भावनोपनिषदः अथर्वणशिरसोऽतनोद्भाष्यम्।
भास्कररायो विदुषां तुष्ट्यै जीवन्मुमुक्षूणाम् ॥

इति सभाष्या भावनोपनिषत् सम्पूर्णा

---

# श्री देवीस्तोत्रपञ्चकम्

## (१) लघुस्तुतिः

ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभां
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः ।
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोस्सदाहस्थितात्
छिन्द्यान्नस्सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥ १

या मात्रा त्रपुसीलतातनुलसत्तन्तुस्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमाः
ज्ञात्वेत्थं न पुनस्स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥ २

दृष्ट्वा सम्भ्रमकारि वस्तु सहसा ऐऐ इति व्याहृतं
येनाकूतवशादपीह वरदे ! बिन्दुं विनाप्यक्षरम् ।
तस्यापि ध्रुवमेव देवि ! तरसा जाते तवानुग्रहे
वाचस्सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्राम्बुजात् ॥ ३

यन्नित्ये ! तव कामराजमपरं मन्त्राक्षरं निष्कलं
तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि ।
आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः
प्रारम्भे प्रणवास्पदप्रणयितां नीत्वोच्चरन्ति स्फुटम् ॥ ४

यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैः
तार्तीयं तदहं नमामि मनसा त्वद्बीजमिन्दुप्रभम् ।
अस्त्यौर्वोऽपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये
गोशब्दो गिरि वर्तते सुनियतं योगं विना सिद्धिदः ॥ ५

एकैकं तव देवि ! बीजमनघं सव्यञ्जनाव्यञ्जनं
कूटस्थं यदि वा पृथक्क्रमगतं यद्वा स्थितं व्युत्क्रमात् ।
यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं
जप्तं वा सफलीकरोति सततं तं तं समस्तं नृणाम् ।। ६

वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे
भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम् ।
उज्जृम्भाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं
ये त्वामम्ब ! न शीलयन्ति मनसा तेषां कवित्वं कुतः ।। ७

ये त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां
सिञ्चन्तीममृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम् ।
अश्रान्ता विकटस्फुटाक्षरपदा निर्याति वक्त्राम्बुजात्
तेषां भारति ! भारती सुरसरित्कल्लोललोलोर्मिवत् ।। ८

ये सिन्दूरपरागपिञ्जपिहितां त्वत्तेजसाऽऽद्यामिमां
उर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव ।
पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर-
क्लान्तस्रस्तकुरङ्गशावकदृशो वश्या भवन्ति स्फुटम् ।। ९

चञ्चत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्रजं
ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिराम् ।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं
माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्यं भजन्ते श्रियः ।। १०

आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं
बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम् ।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं
मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसंवित्तये ।। ११

जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निश्शेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः ।
यद्विद्याधरबृन्दवन्दितपदश्श्रीवत्सराजोऽभवत्
देवि ! त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः ॥ १२

चण्डि ! त्वच्चरणाम्बुजार्चनकृते बिल्वादिलोल्लुण्ठन–
त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः ।
ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितैः
जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ॥ १३

विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः
त्वां देवि ! त्रिपुरे ! परापरमयीं सन्तर्प्य पूजाविधौ ।
यां यां प्रार्थयते मनःस्थिरधियां तेषां त एव ध्रुवं
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥ १४

शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति स्फुटम् ।
लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी
स त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे ॥ १५

देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिः स्वराः
त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः ।
यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं
तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥ १६

लक्ष्मीं राजकुले जयां रणभुवि क्षेमङ्करीमध्वनि
क्रव्याददि्वपसर्पभाजि शबरीं कान्तारदुर्गे गिरौ ।
भूतप्रेतपिशाचजम्बुकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे ॥ १७

माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिश्शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥ १८

आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरै
काद्यैः क्षान्तगतैस्स्वरादिभिरथ क्षान्तैश्च तैस्सस्वरैः ।
नामानि त्रिपुरे भवन्ति खलु यान्यत्यन्तगुह्यानि ते
तेभ्यो भैरवपत्नि ! विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९

बोद्धव्या निपुणं बुधैस्स्तुतिरियं कृत्वा मनस्तद्गतं
भारत्यास्त्रिपुरेत्यनन्यमनसा यत्राद्यवृत्ते स्फुटम् ।
एकद्वित्रिपदक्रमेण कथितस्तत्पादसङ्ख्याक्षरैः
मन्त्रोद्धारविधिर्विशेषसहितस्सत्सम्प्रदायान्वितः ॥ २०

सावद्यं निरवद्यमस्तु यदि वा किं वानया चिन्तया
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि ।
सञ्चिन्त्यापि लघुत्वमात्मनि दृढं सञ्जायमानं हठात्
त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ॥ २१

इति लघुस्तवः प्रथमः

---

## (२) चर्चास्तवः

सौन्दर्यविभ्रमभुवो भुवनाधिपत्य-
सङ्कल्पकल्पतरवस्त्रिपुरे ! जयन्ति ।
एते कवित्वकुमुदप्रकरावबोध-
पूर्णेन्दवस्त्वयि जगज्जननि ! प्रणामाः ॥ १

देवि ! स्तुतिव्यतिकरे कृतबुद्धयस्ते
वाचस्पतिप्रभृतयोऽपि जडीभवन्ति ।
तस्मान्निसर्गजडिमा कतमोऽहमत्र
स्तोत्रं तव त्रिपुरतापनपत्नि ! कर्तुम् ॥ २

मातस्तथापि भवतीं भवतीव्रताप-
विच्छित्तये स्तवमहार्णवकर्णधारः ।
स्तोतुं भवानि ! स भवच्चरणारविन्द-
भक्तिग्रहः किमपि मां मुखरीकरोति ॥ ३

सूते जगन्ति भवती भवती बिभर्ति
जागर्ति तत्क्षयकृते भवती भवानि ! ।
मोहं भिनत्ति भवती भवती रुणद्धि
लीलायितं जयति चित्रमिदं भवत्याः ॥ ४

यस्मिन्मनागपि नवाम्बुजपत्रगौरीं
गौरीं प्रसादमधुरां दृशमादधासि ।
तस्मिन्निरन्तरमनङ्गशरावकीर्ण-
सीमन्तिनीनयनसन्ततयः पतन्ति ॥ ५

पृथ्वीभुजोऽप्युदयनप्रभवस्य तस्य
विद्याधरप्रणतिचुम्बितपादपीठः ।
तच्चक्रवर्तिपदवीप्रणयस्स एषः
त्वत्पादपङ्कजरजःकणजः प्रसादः ॥ ६

त्वत्पादपङ्कजरजःप्रणिपातपूर्वैः
पुण्यैरनल्पमतिभिः कृतिभिः कवीन्द्रैः ।
क्षीरक्षपाकरदुकूलहिमावदाता
कैरप्यवापि भुवनत्रितयेऽपि कीर्तिः ॥ ७

कल्पद्रुमप्रसवकल्पितचित्रपूजां
उद्दीपितप्रियतमामदरक्तगीतिम् ।
नित्यं भवानि ! भवतीमुपवीणयन्ति
विद्याधराः कनकशैलगुहागृहेषु ॥ ८

लक्ष्मीवशीकरणकर्मणि कामिनीनां
अकर्षणव्यतिकरेषु च सिद्धमन्त्रः ।
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो
देवि ! त्वदङ्घ्रिजनितो जयति प्रसादः ॥ ९

देवि ! त्वदङ्घ्रिनखरत्नभुवो मयूखाः
प्रत्यग्रमौक्तिकरुचो मुदमुद्वहन्ति ।
सेवानतिव्यतिकरे सुरसुन्दरीणां
सीमन्तसीम्नि कुसुमस्तबकायितं यैः ॥ १०

मूर्ध्नि स्फुरत्तुहिनदीधितिदीप्तिदीप्तं
मध्येललाटममरायुधरश्मिचित्रम् ।
हृच्चक्रचुम्बि हुतभुक्कणिकानुकारि
ज्योतिर्यदेतदिदमम्ब ! तव स्वरूपम् ॥ ११

रूपं तव स्फुरितचन्द्रमरीचिगौरं
आलोकते शिरसि वागधिदैवतं यः ।
निस्सीमसूक्तिरचनामृतनिर्झरस्य
तस्य प्रसादमधुराः प्रसरन्ति वाचः ॥ १२

सिन्दूरपांसुपटलच्छुरितामिव द्यां
त्वत्तेजसा जतुरसस्नपितामिवोर्वीम् ।
यः पश्यति क्षणमपि त्रिपुरे विहाय
व्रीडां मृडानि ! सुदृशस्तमनुद्रवन्ति ॥ १३

मातर्मुहूर्तमपि यः स्मरति स्वरूपं
लाक्षारसप्रसरतन्तुनिभं भवत्याः ।
ध्यायन्त्यनन्यमनसस्तमनङ्गतप्ताः
प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्यः ॥ १४

योऽयं चकास्ति गगनार्णवरत्नमिन्दुः
योऽयं सुरासुरगुरुः पुरुषः पुराणः ।
यद्भागमर्धमिदमन्धकसूदनस्य
देवि ! त्वमेव तदिति प्रतिपादयन्ति ॥ १५

इच्छानुरूपमनुरूपगुणप्रकर्ष-
सङ्कर्षिणि ! त्वमभिमृश्य यदा बिभर्षि ।
जायेत स त्रिभुवनैकगुरुस्तदानीं
देवश्शिवोऽपि भुवनत्रयसूत्रधारः ॥ १६

ध्यातासि हैमवति ! येन हिमांशुरश्मि-
मालामलद्युतिरकल्मषमानसेन ।
तस्याविलम्बमनवद्यमनन्तकल्पं
अल्पैर्दिनैस्सृजसि सुन्दरि ! वाग्विलासम् ॥ १७

आधारमारुतनिरोधवशेन येषां
सिन्दूररञ्जितसरोजगुणानुकारि ।
दीप्तं हृदि स्फुरति देवि वपुस्त्वदीयं
ध्यायन्ति तानिह समीहितसिद्धिसार्थाः ॥ १८

ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति
रूपं तवाम्ब ! नवयावकपङ्कपिङ्गम् ।
तेषां सदैव कुसुमायुधबाणभिन्न-
वक्षःस्थला मृगदृशो वशगा भवन्ति ॥ १९

त्वामैन्दवीमिव कलामनुफालदेशं
उद्भासिताम्बरतलामवलोकयन्तः ।
सद्यो भवानि ! सुधियः कवयो भवन्ति
त्वं भावनाहितधियां कुलकामधेनुः २०

शर्वाणि ! सर्वजनवन्दितपादपद्मे !
पद्मच्छदद्युतिविडम्बितनेत्रलक्ष्मि !
निष्पापमूर्तिजनमानसराजहंसि !
हंसि त्वमापदमनेकविधां जनस्य ॥ २१

उत्तप्तहेमरुचिरे ! त्रिपुरे ! पुनीहि
चेतश्चिरन्तनमघौघवनं लुनीहि ।
कारागृहे निगलबन्धनयन्त्रितस्य
त्वत्संस्मृतौ झडिति मे निगलास्त्रुटन्ति ॥ २२

त्वां व्यापिनीति सुमना इति कुण्डलीति
त्वां कामिनीति कमलेति कलावतीति ।
त्वां मालिनीति ललितेत्यपराजितेति
देवि ! स्तुवन्ति विजयेति जयेत्युमेति ॥ २३

उद्दामकामपरमार्थसरोजखण्ड-
चण्डद्युतिद्युतिमपासितषड्विकाराम् ।
मोहद्विपेन्द्रकदनोद्यतबोधसिंह-
लीलागुहां भगवतीं त्रिपुरां नमामि ॥ २४

गणेशवटुकस्तुता रतिसहायकामान्विता
स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता ।
अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः
कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ २५

रुद्राणि ! विद्रुममयीं प्रतिमामिव त्वां
ये चिन्तयन्त्यरुणकान्तिमनन्यरूपाम् ।
तानेत्य पक्ष्मलदृशः प्रसभं भजन्ते
कण्ठावसक्तमृदुबाहुलतास्तरुण्यः ॥ २६

त्वद्रूपैकनिरूपणप्रणयिताबन्धो दृशोस्त्वद्गुण-
ग्रामाकर्णनरागिता श्रवणयोस्त्वत्संस्मृतिश्चेतसि ।
त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्तितं वाचि मे
कुत्रापि त्वदुपासनव्यसनिता मे देवि मा शाम्यतु ॥ २७

त्वद्रूपमुल्लसितदाडिमपुष्परक्त
उद्भावयेन्मदनदैवतमक्षरं यः ।
तं रूपहीनमपि मन्मथनिर्विशेषं
आलोकयन्त्युरुनितम्बतटास्तरुण्यः ॥ २८

ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मि-
स्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि ! त्रिभुवनेश्वरि ! विश्वमातः !
अन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥ २९

यः स्तोत्रमेतदनुवासरमीश्वरायाः
श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्येप्सितं फलति राजभिरीड्यतेऽसौ
जायेत स प्रियतमो मदिरेक्षणानाम् । ३०

इति चर्चास्तवः द्वितीयः

---

## (३) घटस्तवः

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ १

देवि ! त्र्यम्बकपत्नि ! पार्वति ! सति ! त्रैलोक्यमातश्शिवे !
शर्वाणि ! त्रिपुरे ! मृडानि ! वरदे ! रुद्राणि ! कात्यायनि ।
भीमे ! भैरवि ! चण्डि ! शर्वरिकले ! कालक्षये ! शूलिनि !
त्वत्पादप्रणयाननन्यमनसः पर्याकुलान्पाहि नः ॥ २

देवि ! त्वां सकृदेव यः प्रणमति क्षोणीभृतस्तं नम-
न्त्याजन्मस्फुरदङ्घ्रिपीठविलुठत्कोटीरकोटिच्छटाः
यस्त्वामर्चति सोऽर्च्यते सुरगणैर्यस्स्तौति स स्तूयते
यस्त्वां ध्यायति तं स्मरार्तिविधुरा ध्यायन्ति वामभ्रुवः ॥ ३

उन्मत्ता इव सग्रहा इव विषव्यासक्तमूर्छा इव
प्राप्तप्रौढमदा इवार्तिविरहग्रस्ता इवार्ता इव ।
ये ध्यायन्ति हि शैलराजतनयां धन्यास्त एवाग्रतः
त्यक्तोपाधिविवृद्धरागमनसो ध्यायन्ति तान् सुभ्रुवः ॥ ४

ध्यायन्ति ये क्षणमपि त्रिपुरे ! हृदि त्वां
लावण्ययौवनधनैरपि विप्रयुक्ताः ।
ते विस्फुरन्ति ललितायतलोचनानां
चित्तैकभित्तिलिखितप्रतिमाः पुमांसः ॥ ५

एतं किं नु दृशा पिबाम्युत विशाम्यस्याङ्गमङ्गैर्निजैः
किं वाऽमुं निगराम्यनेन सहसा किं वैकतामाश्रये ।
यस्येत्थं विवशो विकल्पललिताकूतेन योषिज्जनः
किं तद्यन्न करोति देवि ! हृदये यस्य त्वमावर्तसे ॥ ६

विश्वव्यापिनि यद्वदीश्वर इति स्थाणावनन्याश्रयः
शब्दशक्तिरिति त्रिलोकजननि ! त्वय्येव तथ्यस्थितिः ।
इत्थं सत्यपि शक्नुवन्ति यदिमाः क्षुद्रा रुजो बाधितुं
त्वद्भक्तानपि न क्षिणोषि च रुषा तद्देवि ! चित्रं महत् ॥ ७

इन्दोर्मध्यगतां मृगाङ्कसदृशच्छायां मनोहारिणीं
पाण्डूत्फुल्लसरोरुहासनगतां स्निग्धप्रदीपच्छविम् ।
वर्षन्तीममृतं भवानि ! भवतीं ध्यायन्ति ये देहिनः
ते निर्मुक्तरुजो भवन्ति रिपवः प्रोज्झन्ति तान् दूरतः ॥ ८

पूर्णेन्दोश्शकलैरिवातिबहलैः पीयूषपूरैरिव
क्षीराब्धेर्लहरीभरैरिव सुधापङ्कस्य पिण्डैरिव ।
प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये श्रद्धया
चित्तान्तर्निहितार्तितापविपदस्ते सम्पदं बिभ्रति ॥ ९

ये संस्मरन्ति तरलां सहसोल्लसन्तीं
त्वां ग्रन्थिपञ्चकभिदं तरुणार्कशोणाम् ।
रागार्णवे बहलरागिणि मज्जयन्तीं
कृत्स्नं जगद्दधति चेतसि तान् मृगाक्ष्यः ॥ १०

लाक्षारसस्नपितपङ्कजतन्तुतन्वीं
अन्तः स्मरत्यनुदिनं भवतीं भवानि !
यस्त्वं स्मरप्रतिममप्रतिमस्वरूपाः
नेत्रोत्पलैर्मृगदृशो भृशमर्चयन्ति ॥ ११

स्तुमस्त्वां वाचमव्यक्तां हिमकुन्देन्दुरोचिषम् ।
कदम्बमालां बिभ्राणामापादतललम्बिनीम् ॥ १२

मूर्ध्नीन्दोस्सितपङ्कजासनगतां प्रालेयपाण्डुत्विषं
वर्षन्तीममृतं सरोरुहभुवो वक्त्रेऽपि रन्ध्रेऽपि च ।

अच्छिन्ना च मनोहरा च ललिता चातिप्रसन्नापि च
त्वामेवं स्मरतस्स्मरारिदयिते वाक्सर्वतो वल्गति ॥ १३

ददातीष्टान् भोगान् क्षपयति रिपून् हन्ति विपदो
दहत्याधीन् व्याधीन् शमयति सुखानि प्रतनुते ।
हठादन्तर्दुःखं दलयति पिनष्टीष्टविरहं
सकृद्ध्याता देवी किमिव निरवद्यं न कुरुते ॥ १४

यस्त्वां ध्यायति वेत्ति विन्दति जपत्यालोकते चिन्तय-
त्यन्वेति प्रतिपद्यते कलयति स्तौत्याश्रयत्यर्चति ।
यश्च त्र्यम्बकवल्लभे ! तव गुणानाकर्णयत्यादरात्
तस्य श्रीर्न गृहादपैति विजयस्तस्याग्रतो धावति ॥ १५

किंकिं दुःखं दनुजदलिनि ! क्षीयते न स्मृतायां
का का कीर्तिः कुलकमलिनि ! ख्याप्यते न स्तुतायाम् ।
का का सिद्धिस्सुरवरनुते ! प्राप्यते नार्चितायां
कं कं योगं त्वयि न चिनुते चित्तमालम्बितायाम् ॥ १६

ये देवि ! दुर्धरकृतान्तमुखान्तरस्थाः
ये कालि ! कालघनपाशनितान्तबद्धाः ।
ये चण्डि ! चण्डगुरुकल्मषसिन्धुमग्नाः
तान् पासि मोचयसि तारयसि स्मृतैव ॥ १७

लक्ष्मीवशीकरणचूर्णसहोदराणि
त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।
यानि प्रणाममिलितानि नृणां ललाटे
लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥ १८

रे मूढाः ! किमयं वृथैव तपसा कायः परिक्लिश्यते
यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्तीक्रियन्ते गृहाः ।

भक्तिश्चेदविनाशिनी भगवतीपादद्वयी सेव्यतां
उन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥ १९

याचे न कञ्चन न कञ्चन वञ्चयामि
सेवे न कञ्चन निरस्तसमस्तदैन्यः ।
श्लक्ष्णं वसे मधुरमद्मि भजे वरस्त्रीः
देवी हृदि स्फुरति मे कुलकामधेनुः ॥ २०

नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ २१

इति घटस्तवः तृतीयः

---

## (४) अम्बास्तवः

यामामनन्ति मुनयः प्रकृतिं पुराणीं
विद्येति यां श्रुतिरहस्यविदो वदन्ति ।
तामर्धपल्लवितशङ्कररूपमुद्रां
देवीमनन्यशरणश्शरणं प्रपद्ये ॥ १

अम्ब स्तवेषु तव तावदकर्तृकाणि
कुण्ठीभवन्ति वचसामपि गुम्भनानि ।
डिम्भस्य मे स्तुतिरसावसमञ्जसापि
वात्सल्यनिघ्नहृदयां भवतीं धिनोतु ॥ २

व्योमेति बिन्दुरिति नाद इतीन्दुलेखा-
रूपेति वाग्भवतनूरिति मातृकेति
निस्स्यन्दमानसुखबोध सुधास्वरूपा
विद्योतसे मनसि भाग्यवतां जनानाम् ॥ ३

आविर्भवत्पुलकसन्ततिभिश्शरीरैः
निस्स्यन्दमानसलिलैर्नयनैश्च नित्यम् ।
वाग्भिश्च गद्गदपदाभिरुपासते ये
पादौ तवाम्ब ! भुवनेषु त एव धन्याः ॥ ४

वक्त्रं यदुद्यतमभिष्टुतये भवत्याः
तुभ्यं नमो यदपि देवि ! शिरः करोति ।
चेतश्च यत्त्वयि परायणमम्ब ! तानि
कस्यापि कैरपि भवन्ति तपोविशेषैः ॥ ५

मूलालवालकुहरादुदिता भवानि !
निर्भिद्य षट्सरसिजानि तटिल्लतेव ।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दु-
निस्स्यन्दमानपरमामृततोयरूपा ॥ ६

दग्धं यदा मदनमेकमनेकधा ते
मुग्धः कटाक्षविधिरङ्कुरयाञ्चकार ।
धत्ते तदाप्रभृति देवि ललाटनेत्रं
सत्यं ह्रियैव मुकुलीकृतमिन्दुमौलेः ॥ ७

अज्ञातसम्भवमनाकलितान्ववायं
भिक्षुं कपालिनमवाससमद्वितीयम् ।
पूर्वं करग्रहणमङ्गलतो भवत्याः
शम्भुं क एव बुबुधे गिरिराजकन्ये ॥ ८

चर्माम्बरं च शवभस्मविलेपनं च
भिक्षाटनं च नटनं च परेतभूमौ ।
वेतालसंहतिपरिग्रहता च शम्भोः
शोभां बिभर्ति गिरिजे! तव साहचर्यात् ॥ ९

कल्पोपसंहरणकेलिषु पण्डितानि
चण्डानि खण्डपरशोरपि ताण्डवानि ।
आलोकनेन तव कोमलितानि मातः!
लास्यात्मना परिणमन्ति जगद्विभूत्यै ॥ १०

जन्तोरपश्चिमतनोस्सति कर्मसाम्ये
निश्शेषपाशपटलच्छिदुरा निमेषात्
कल्याणि! देशिककटाक्षसमाश्रयेण
कारुण्यतो भवति शम्भववेधदीक्षा ॥ ११

मुक्ताविभूषणवती नवविद्रुमाभा
यच्चेतसि स्फुरसि तारकितेव सन्ध्या ।
एकस्स एव भुवनत्रयसुन्दरीणां
कन्दर्पतां व्रजति पञ्चशरीं विनापि ॥ १२

ये भावयन्त्यमृतवाहिभिरंशुजालैः
आप्यायमानभुवनाममृतेश्वरीं त्वाम् ।
ते लङ्घयन्ति ननु मातरलङ्घनीयां
ब्रह्मादिभिस्सुरवरैरपि कालकक्षाम् ॥ १३

यस्स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्यां
व्याख्यासमुद्यतकरां शरदिन्दुशुभ्राम् ।
पद्मासनां च हृदये भवतीमुपास्ते
मातः! स विश्वकवितार्किकचक्रवर्ती ॥ १४

बर्हावतंसयुतबर्बरकेशपाशां
गुञ्जावलीकृतघनस्तनहारशोभाम् ।
श्यामां प्रवालवदनां सुकुमारहस्तां
त्वामेव नौमि शबरीं शबरस्य जायाम् ॥ १५

अर्धेन किं नवलताललितेन मुग्धे
क्रीतं विभोः परुषमर्धमिदं त्वयेति ।
आलीजनस्य परिहासवचांसि मन्ये
मन्दस्मितेन तव देवि! जडीभवन्ति ॥ १६

ब्रह्माण्डबुद्बुदकदम्बकसङ्कुलोऽयं
मायोदधिर्विविधतत्त्वतरङ्गमालः ।
आश्चर्यमम्ब ! झडिति प्रलयं प्रयाति
त्वद्ध्यानसन्ततिमहाबडबामुखाग्नौ ॥ १७

दाक्षायणीति कुटिलेति कुहारिणीति
कात्यायनीति कमलेति कलावतीति ।
एका सती भगवती परमार्थतोऽपि
संदृश्यसे बहुविधा ननु नर्तकीव ॥ १८

आनन्दलक्षणमनाहतनाम्नि देशे
नादात्मना परिणतं तव रूपमीशे ।
प्रत्यङ्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥ १९

त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनासि पुरुषे पवने बलं त्वम् ।
त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा
निस्सारमेव निखिलं त्वदृते यदि स्यात् ॥ २०

ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षं
सूते पयांसि यदहिर्धरणीं च धत्ते ।
यद्वाति वायुरनलो यदुदर्चिरास्ते
तत्सर्वमम्ब ! तव केवलमाज्ञयैव ॥ २१

सङ्कोचमिच्छसि यदा गिरिजे ! तदानीं
वाक्तर्कयोस्त्वमसि भूमिरनामरूपा ।
यद्वा विकासमुपयासि यदा तदानीं
त्वन्नामरूपगणनास्सुकरा भवन्ति ॥ २२

भोगाय देवि ! भवतीं कृतिनः प्रणम्य
भ्रूकिङ्करीकृतसरोजगृहास्सहस्रम् ।
चिन्तामणिप्रचयकल्पितकेलिशैले
कल्पद्रुमोपवन एव चिरं रमन्ते ॥ २३

हर्तुं त्वमेव भवसि त्वदधीनमीशे
संसारतापमखिलं दयया पशूनाम् ।
वैकर्तनी किरणसंहतिरेव शक्ता
घर्मं निजं शमयितुं निजयैव वृष्ट्या ॥ २४

शक्तिश्शरीरमधिदैवतमन्तरात्मा
ज्ञानं क्रिया करणमानसजालमिच्छा ।
ऐश्वर्यमायतनमावरणानि च त्वं
किं तन्न यद्भवसि देवि शशाङ्कमौलेः ॥ २५

भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा
विद्याऽनले मरुति शान्तिरतीव कान्तिः ।
व्योम्नीति याः किल कलाः कलयन्ति विश्वं
तासां हि दूरतरमम्ब ! पदं त्वदीयम् ॥ २६

यावत्पदं पदसरोजयुगं त्वदीयं
नाङ्गीकरोति हृदयेषु जगच्छरण्ये !
तावद्विकल्पजटिलाः कुटिलप्रकाराः
तर्कग्रहास्समयिनां प्रलयं न यान्ति ॥ २७

निर्देवयानपितृयानविहारमेके
कृत्वा मनः करणमण्डलसार्वभौमम् ।
ध्याने निवेश्य तव कारणपञ्चकस्य
पर्वाणि पार्वति ! नयन्ति निजासनत्वम् ।। २८

स्थूलासु मूर्तिषु महीप्रमुखासु मूर्तेः
कस्याश्चनापि तव वैभवमम्ब ! यस्याः ।
पत्या गिरामपि न शक्यत एव वक्तुं
सापि स्तुता किल मयेति तितिक्षितव्यम् ।। २९

कालाग्निकोटिरुचिमम्ब षडध्वशुद्धौ
आप्लावनेषु भवतीममृतौघवृष्टिम् ।
श्यामां घनस्तनतटां शकलीकृताघां
ध्यायन्त एव जगतां गुरवो भवन्ति ।। ३०

विद्यां परां कतिचिदम्बरमम्ब ! केचित्
आनन्दमेव कतिचित्कतिचिच्च मायाम् ।
त्वां विश्वमाहुरपरे वयमामनामः
साक्षादपारकरुणां गुरुमूर्तिमेव ।। ३१

कुवलयदलनीलं बर्बरस्निग्धकेशं
पृथुतरकुचभाराक्रान्तकान्तावलग्नम् ।
किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नः
सकलजननि ! मातः ! सन्ततं सन्निधत्ताम् ।। ३२

इत्यम्बास्तवः चतुर्थः

---

## (५) सलकजननीस्तोत्रम्

अजानन्तो यान्ति क्षयमवशमन्योन्यकलहै:
अमी मायाग्रन्थौ तव परिलुठन्तस्समयिनः ।
जगन्मातः ! जन्मज्वरभयतमःकौमुदि ! वयं
नमस्ते कुर्वाणाश्शरणमुपयामो भगवतीम् ॥ १

वचस्तर्कागम्यस्वरसपरमानन्दविभव-
प्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे ।
शिवाद्याराध्याय स्तनभरविनम्राय सततं
नमस्तस्मै कस्मैचन भवतु मुग्धाय महसे ॥ २

अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी
शिवस्यासीर्यस्त्वं परिणयविधौ देवि ! गृहिणी ।
सवित्री भूतानामपि यदुदभूश्शैलतनया
तदेतत्संसारप्रणयनमहानाटकमुखम् ॥ ३

ब्रुवन्त्येके तत्त्वं भगवति सदन्ये विदुरसत्
परे मातः ! प्राहुस्तव सदसदन्ये सुकवयः ।
परे नैतत्सर्वं समभिदधते देवि ! सुधियः
तदेतत्त्वन्मायाविलसितमशेषं ननु शिवे ॥ ४

लुठद्गुञ्जाहारस्तनभरनमन्मध्यलतिकां
उदञ्चद्घर्माम्भःकणगुणित*वक्राम्बुजरुचम् ।
शिवं पार्थत्राणप्रवणमृगयाकारगुणितं
शिवामन्वग्यान्तीं शरणमहमन्वेमि शबरीम् ॥ ५

मिथःकेशाकेशिप्रथननिधनास्तर्कघटनाः
बहुश्रद्धाभक्तिप्रणतिविषयाश्शास्त्रविधयः ।

---

* नीलोत्पलरुचिम्-पा·

प्रसीद प्रत्यक्षीभव गिरिसुते ! देहि शरणं
निरालम्बं चेतः परिलुठति पारिप्लवमिदम् ॥ ६

शुनां वा वह्नेर्वा खगपरिषदो वा यदशनं
कदा केन क्वेति क्वचिदपि न कश्चित्कलयति ।
अमुष्मिन् विश्वासं विजहिहि ममाह्याय वपुषि
प्रपद्येथाश्चेतः ! सकलजननीमेव शरणम् ॥ ७

तटित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं
प्रविष्टं स्वाधारं पुनरपि सुधावृष्टिवपुषा ।
किमप्यष्टाविंशत्किरणसकलीभूतमनिशं
भजे धाम श्यामं कुचभरनतं बर्बरकचम् ॥ ८

चतुष्पत्रान्तष्षड्दलपुटभगान्तस्त्रिवलय-
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतिलते ।
षडश्रं भित्त्वाऽऽदौ दशदलमथ द्वादशदलं
कलाश्रं च द्व्यश्रं गतवति नमस्ते गिरिसुते ॥ ९

कुलं केचित्प्राहुर्वपुरकुलमन्ये तव बुधाः
परे तत्संभेदं समभिदधते कौलमपरे ।
चतुर्णामप्येषामुपरि किमपि प्राहुरपरे
महामाये ! तत्त्वं तव कथममी निश्चिनुमहे ॥ १०

षडध्वारण्यानीं प्रलयरविकोटिप्रतिरुचा
रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम् ।
वितन्वानश्शैवं किमपि वपुरिन्दीवररुचिः
कुचाभ्यामानम्रस्तव पुरुषकारो विजयते ॥ ११

प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं
प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कबलयन् ।

प्रपद्योर्ध्वं नादं लयदहनभस्मीकृतकुलः
　　प्रसादात्ते जन्तुश्शिवमकुलमम्ब ! प्रविशति ॥　　१२

मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं
　　भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् ।
कटाक्षश्चेद्यत्र क्वचन तव मातः करुणया
　　शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥　　१३

प्रियङ्गुश्यामाङ्गीमरुणतरवासःकिसलयां
　　समुन्मीलन्मुक्ताफलवहलनेपथ्यसुभगाम् ।
स्तनद्वन्द्वस्फारस्तबकनमितां कल्पलतिकां
　　सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम् ॥　　१४

षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलैः
　　लसन्मुद्राफेनैर्बहुविधचलद्दैवतझषैः ।
क्रमस्रोतोभिस्त्वं वहसि परनादामृतनदी
　　भवानि ! प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ॥　　१५

महीपाथोवह्निश्वसनवियदात्मेन्दुरविभिः
　　वपुर्भिर्ग्रस्तांशैरपि तव कियानम्ब ! महिमा ।
अमून्यालोल्यन्ते भगवति ! न कुत्राप्यणुतमां
　　अवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ॥　　१६

कलामाज्ञां प्रज्ञां समयमनुभूतिं समरसं
　　गुरुं पारम्पर्यं विनयमुपदेशं शिवपदम् ।
प्रमाणं निर्वाणं प्रकृतिमभिभूतिं परगुहां
　　विधिं विद्यामाहुस्सकलजननीमेव मुनयः ॥　　१७

प्रलीने शब्दौघे तदनु विरते बिन्दुविभवे
　　ततस्तत्त्वे चाष्टध्वनिभिरनपायिन्यधिगते ।

श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां
स्वसंवित्तिं योगी रसयति शिवाख्यां भगवतीम् ॥ १८

परानन्दाकारां निरवधिशिवैश्वर्यवपुषं
निराकारां ज्ञानप्रकृतिमपरिच्छिन्नकरुणाम् ।
सवित्रीं लोकानां निरतिशयधामास्पदपदां
भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥ १९

जगत्काये कृत्वा तदपि हृदये तच्च पुरुषे
पुमांसं बिन्दुस्थं तदपि वियदाख्ये च गहने ।
तदेतद्ज्ञानाख्ये तदपि परमानन्दगहने
महाव्योमाकारे त्वदनुभवशीलो विजयते ॥ २०

विधे ! वेद्ये ! विद्ये ! विविधसमये ! वेदगुलिके !
विचित्रे ! विश्वाद्ये ! विनयसुलभे ! वेदजननि !
शिवज्ञे ! शूलस्थे ! शिवपदवदान्ये ! शिवनिधे !
शिवे ! मातः ! मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥ २१

विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले
हरिं शूलप्रोतं यदगमयदंसाभरणताम् ।
अलंचक्रे कण्ठं यदपि गरलेनाम्ब ! गिरिशः
शिवस्थायाश्शक्तेस्तदिदमखिलं ते विलसितम् ॥ २२

विरिञ्चयाख्या मातः ! सृजसि हरिसंज्ञा त्वमवसि
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशाम् ।
भवन्ती नादाख्या विहरसि च पाशौघदलनी
त्वमेवैकाऽनेका भवसि कृतिभेदैर्गिरिसुते ॥ २३

मुनीनां चेतोभिः प्रमुदितकषायैरपि मनाक्
अशक्यं संस्प्रष्टुं चकितचकितैरम्ब ! सततम् ।

